TRIVANDRUM SANSKRIT SERIES.

No. CVII.

Śrī Setu Lakṣmī Prasādamālā.

No. XIX.

# THE KÂVYARATNA

OF

# ARHADDÂSA

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ,

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HER HIGHNESS THE MAHARANI REGENT OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1931.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०७.

श्रीसेतुलक्ष्मीप्रसादमाला

ग्रन्थाङ्कः १९.

अर्हद्दासविरचितं

मुनिसुव्रतकाव्यं नाम

# काव्यरत्नं

प्राचीनग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम् ।

---

तच्च

अनन्तशयने

महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम्

---

कोल्लम्बाब्दाः ११०६. क्रिस्ताब्दाः १९३१.

# PREFACE.

It is a matter for gratification that we have been able to enrich the Trivandrum Sanskrit Series by the publication of the Munisuvrata Kāvya, a work dealing with the life of Munisuvrata, a Jain Tīrthaṅkara, by a Jain poet Arhaddāsa, as it is our desire that the Series should include in it the works on all the great religions in India. The work contains 10 Sargas and the title of the poem is inscribed at the commencement of the manuscript as Munisuvrata Kāvya. But it is clear from the stanza,

"यद् वर्ण्यते जैनचरित्रमत्र
चिन्तामणिर्भव्यजनस्य यच्च ।
हृद्यार्थरत्नैकनिधिः स्वयं मे
तत् काव्यरत्नाभिधमेतदस्तु ॥" (P. 4).

that the title of the poem intended by the poet is Kāvyaratna.

It is possible to infer from the stanzas,

"अर्हद्दासः सभक्त्युल्लसितमवसितं भूधरे तत्र कृत्वा
कल्याणं तीर्थकर्तुः सुरकुलमहितः प्रापदात्मीयलोकम् ।
अर्हद्दासोऽयमित्थं जिनपतिचरितं गौतमस्वाम्युपज्ञं
गुम्फित्वा काव्यबन्धं कविकुलमहितः प्रापदुच्चैः प्रमोदम् ॥"

"धावन् कापथसंभृते भववने सन्मार्गमेकं परं
त्यक्त्वा श्रान्ततरश्चिराय कथमप्यासाद्य कालादमुम् ।
सद्धर्मामृतमुद्धृतं जिनवचः क्षीरोदधेरादरात्
पायंपायमितश्रमः सुखपदं दासो भवत्यर्हतः ॥" (P. 76).

that the name of the poet is Arhaddāsa and that it is a title obtained by him in virtue of his great devotion for the 'Arhat'. It would be evident to all Sahṛdayas that this poem of Arhaddāsa is a delightful composition like the poems of Kālidāsa. It has not been possible for us to gather any further information about this great poet.

An index to all principal topics dealt with in the poem has been prepared and appended.

# निवेदना ।

महाकविश्रीमदर्हद्दासविरचितमिदं **श्रीमुनिसुव्रतकाव्यं** नाम **काव्य-रत्नं** किमप्यनर्घं रत्नमस्मात्पौरस्त्यग्रन्थमालायाः । अखिलमतीयग्रन्थजातमम-त्सरमाविष्कर्तुमनसामस्माकमस्य रत्नस्य प्रकाशनं मन्ये धन्यतायाः कोऽपि प्र-कटनापर्यायः । जिनाचार्यवर्यस्य श्रीमुनिसुव्रतस्य चरितवर्णनपरमिदं दशसर्गी-सम्पुटितं काव्यं मातृकायामादौ **श्रीमुनिसुव्रतकाव्यनाम्ना** समुचितमेव समुत्तंसितं दृश्यते ।

"यद् वर्ण्यते जैनचरित्रमत्र
चिन्तामणिर्भव्यजनस्य यच्च ।
हृद्यार्थरत्नैकनिधिः स्वयं मे
तत् **काव्यरत्नाभिधमेतदस्तु** ॥"

(श्लो० २०. स० १. पृ० ४)

इति श्लोकेन कविसम्मतमस्याभिधानं **काव्यरत्नमिति** स्पष्टम् ।

"अर्हद्दासः स भक्त्युल्लसितगवासितं भूधरे तत्र कृत्वा
कल्याणं तीर्थकर्तुः सुरकुलमहितः प्रापदात्मीयलोकम् ।
अर्हद्दासोऽयमित्थं जिनपतिचरितं गौतमस्वाम्युपज्ञं
गुम्फित्वा काव्यबन्धं कविकुलमहितः प्रापदुच्चैः प्रमोदम् ॥
धावन् कापथसम्भृते भववने सन्मार्गमेकं परं
त्यक्त्वा श्रान्ततरश्चिराय कथमप्यासाद्य कालादमुम् ।
सद्धर्मामृतमुद्धृतं जिनवचःक्षीरोदधेरादरात्
पायंपायमितश्रमः सुखपदं दासो भवत्यर्हतः ॥"

(श्लो० ६३, ६४. स० १०. पृ० ७६)

इति पद्याभ्यां कविनामधेयम**र्हद्दास** इति, तच्चार्हद्भक्तिमहिमातिशयात् काव्य-रचनानिपुणमतेरस्य विशदसम्पन्नामिति च शक्यमभ्यूहितुम् ।

सर्वथा दासोपनामाऽयं महाकविः **श्रीकालिदासवद् रघुवंशादिनानेन काव्यरत्नेन** सहृदयाग्रणी विजयत इत्यनुभवसाक्षिकोऽयं समाचारः । तमिमं **कविमर्हद्दासं** प्रति न किञ्चिदन्यद् विज्ञातुं पारितम् ।

In the stanza,

"श्रीमल्लिनाथगणिनाथ तदीरितेन
पृष्टः समस्तविदसौ निजगाद तत्त्वम् ।" (P. 73).

it is said that the revered teacher Munisuvrata explained the Tattva to Mallinātha and this statement is in obvious contradiction to the statements of Mrs. Sinclair Stevenson M. A., Sc. D. and Jagmander Lal Jaini M. A. The former observes :—"The nineteenth Tīrthaṅkara (Mallinātha) is the most interesting of all ........." (vide page 56, The Heart of Jainism), and the latter also mentions Mallinātha as the 19th and Munisuvrata as the 20th Tīrthaṅkaras (vide table attached after page 6, "Outlines of Jainism").

Thus both of them consider Mallinātha to be the 19th Ācārya and the predecessor of Munisuvrata. If the Mallinātha of our Arhaddāsa who is desirous of receiving instruction at the hands of Munisuvrata, the exponent of Tattva, is the same as the Mallinātha of the above mentioned scholars, then he could only have been a contemporary and not the predecessor.

A palm leaf manuscript belonging to the Raja of Chirakkal and a transcript belonging to the Adyar Library, Madras, have been utilized for the publication of this work and we express our gratitude to the owners of these manuscripts for their kindness in placing them at our disposal.

*Trivandrum,*
*15-12-1106.*

K. SAMBAŚIVA ŚĀSTRI.

# निवेदना ।

महाकविश्रीमदर्हद्दासविरचितमिदं **श्रीमुनिसुव्रतकाव्यं** नाम **काव्य-रत्नं** किमप्यनर्घं रत्नमस्मत्पौरस्त्यग्रन्थमालायाः । अखिलमतीयग्रन्थजातमम-त्सरमाविष्कर्तुमनसामस्माकमस्य रत्नस्य प्रकाशनं मन्ये धन्यतायाः कोऽपि प्र-कटनापर्यायः । जिनाचार्यवर्यस्य **श्रीमुनिसुव्रतस्य** चरितवर्णनपरमिदं दशसर्गी-सम्पुटितं काव्यं मातृकायामादौ **श्रीमुनिसुव्रतकाव्यनाम्ना** समुचितमेव समुत्तंसितं दृश्यते ।

> "यद् वर्ण्यते जैनचरित्रमत्र
>> चिन्तामणिर्भव्यजनस्य यत्र ।
>
> हृद्यार्थरत्नैकनिधिः स्वयं मे
>> तत् **काव्यरत्नाभिधमेतदस्तु** ॥"

(श्लो० २०. स० १. पृ० ४)

इति श्लोकेन कविसम्मतगम्याभिधानं **काव्यरत्नमिति** स्पष्टम् ।

> "अर्हद्दासः स भक्त्युल्लसितमवसितं भूधरे तत्र कृत्वा
>> कल्याणं तीर्थकर्तुः सुरकुलमहितः प्रापदात्मीयलोकम् ।
>
> अर्हद्दासोऽयमित्थं जिनपतिचरितं गौतमस्याभ्युपज्ञं
>> गुम्फित्वा काव्यबन्धं कविकुलमहितः प्रापदुच्चैः प्रमोदम् ॥
>
> धावन् कापथसम्भृते भववने सन्मार्गमेकं परं
>> त्यक्त्वा श्रान्ततरश्चिराय कथमप्यासाद्य कालादमुम् ।
>
> सद्धर्मामृतमुद्धृतं जिनवचःक्षीरोदधेरादरात्
>> पायंपायमितश्रमः सुखपदं दासो भवत्यर्हतः ॥"

(श्लो० ६३, ६४. स० १०. पृ० ७५)

इति पद्याभ्यां कविनामधेयमर्हद्दास इति, तथार्हद्भक्तिमहिमानिधयात् काव्य-रचनानिपुणमतेरस्य बिरुदसम्पन्नमिति न शक्यमभ्यूहितुम् ।

सर्वथा दासोत्तरोऽयं महाकविः **श्रीकालिदासवद् रघुवंशादिनानेन काव्यरत्नेन** सहृदयालङ्कारो विजयत इत्यनुभवसाक्षिकोऽयं समाचारः । तमिमं **कविमर्हद्दासं** प्रति न किञ्चिदन्यद् विज्ञातुं पारितम् ।

इहत्यान् मुख्यान् विषयान् संक्षिपती काचन सूची चरितजिज्ञासूनामुपकाराय साकमनेनैव सम्पुटेन मुखतः सङ्घटिता । तद्दिशा दशमसर्गीयाष्टाचत्वारिंशश्लोके —

"श्रीमल्लिनाथगणिनाथ तदीरितेन
पृष्टः समस्तविदसौ निजगाद तत्त्वम् ।"

इत्यंशेन श्रीमल्लिनाथगणिने भगवता मुनिसुव्रतेन तत्त्वनिगदनमुपवर्ण्यमानं, मिस्सिस्. सिन्क्लेयर् स्टीवन्सन् एम्. ए., एस्सि. डि., जग्मन्दर्लाल् जयिनि एम्. ए. इत्यनयोः पण्डितयोरभिप्रायेण विरुध्यमानं दृश्यते । तयोर्हि — मिस्सिस्. सिन्क्लेयर् स्टीवन्सन् एकोनाविंशोयं सर्वाभिनन्द्यमहिमा तीर्थङ्करो मल्लिनाथः, विंशश्च मुनिसुव्रतस्तादृश इति (*The Heart of Jainism. p. 56*) जग्मन्दर्लाल् जयिनि एम्. ए. चतुर्विंशतौ तीर्थङ्करेषु सुप्रसिद्ध एकोनविंशो मल्लिनाथो विंशश्च मुनिसुव्रत इति च मन्वाते (*Table attached after page 6. Outlines of Jainism.*)

यदि च मुनिसुव्रतात् तत्त्वाख्यातुरुपदेशलिप्सुरस्मदर्हद्दासीयमल्लिनाथः पूर्वोक्तपण्डिताभिमतश्चाभिन्नावभविष्यतां, तदा समसमयजीवितावश्यम्भावेन प्राक्तनतावादो न मनागपि समगंस्यतेति विरोधोऽयं दुष्परिहर एव ।

अस्य रत्नस्य प्रकाशनोपयोगि परिशोधनघर्षणं बहुमान्यश्री-चिरक्कल्-राजसम्बन्धिनीं तालपत्रात्मिकां, मद्रनगरस्थ-अडयार्ग्रन्थशालीयां पत्रात्मिकां च द्वे मातृके निकषदृषदावाश्रित्य साधितम् । अतस्तदुभयस्वामिभ्यां कृतज्ञतानिवेदनपुरस्सरमिदं ग्रन्थमालायामुपगुम्भ्य महद्भ्य उपहरामि ।

अनन्तशयनम्,
१५-१२-११०६.

**के. साम्बशिवशास्त्री.**

॥ श्रीः ॥

श्रीपद्मनाभसेवि-
न्यखिलश्रीवर्धनी महाराज्ञी ।
श्रीसेतुलक्ष्म्यभिख्या
प्रत्यक्षा जयति वञ्चिभूलक्ष्मीः ॥

ग्रन्थावलिरियमिन्धे
प्रसाधिता तत्प्रसादगुणगुम्फा ।
श्रीसहितसेतुलक्ष्मी-
प्रसादमाला सुवर्णमणिचित्रा ॥

## मुख्यविषयाः ।

| सर्गो | श्लो० | विषयाः. |
|---|---|---|
| १. | ११. | काव्यकथाया मूलम् |
| ,, | २०,२१. | काव्यनामधेयम् |
| ३. | १२,१३. | नायकजन्मवृत्तसूचनम् |
| ,, | २३ &c. | नायकमातुः स्वप्नदर्शनम |
| ४. | १६. | नायकजन्मसमयः |
| ६. | १०. | अभिषेकः |
| ,, | ४३. | नामकरणम् |
| ७. | १७. | विवाहो राज्याभिषेकश्च |
| ,, | ३१. | राज्यपरिपालनकालः |
| ८. | २. | गजराजवृत्तम् |
| ,, | ३. | नायकस्य वैराग्योत्पत्तिः |
| ,, | ८. | तनयं राज्येऽभिषिच्य प्रव्रजनम् |
| ,, | १०. | पाण्डुवनप्रवेशः नीलवने तपश्चर्या च |
| ,, | १५. | दीक्षाप्राप्तिसमयः |
| ९. | ३५. | दीक्षाकालपरिमाणम् |
| १०. | ८. | धनदेन शक्राज्ञया सभानयनम् |
| ,, | ४८. | सभायां मल्लिषेणगणिप्रार्थितेन भगवता तत्त्वोपदेशः |
| ,, | ५९. | भगवतः सम्मेदशैलप्राप्तिः |

॥ श्रीः ॥

ॐ नमः सिद्धेभ्यः ।

अर्हद्दासविरचितं

# श्रीमुनिसुव्रतकाव्यं नाम

# काव्यरत्नम् ।

---

## प्रथमः सर्गः ।

श्रियं स वः श्रीवृषभो विशिष्याद्
यस्यालिमालावृतवत् सभायाम् ।
बभौ नतेन्द्रोत्करमौलिनील-
प्रभावलीलालितमब्जपीठम् ॥ १ ॥

चन्द्रप्रभं नौमि यदङ्गकान्तिं
ज्योत्स्नेति मत्वा द्रवतीन्दुकान्तः ।
चकोरयूथं पिबति स्फुटन्ति
कृष्णेऽपि पक्षे किल कैरवाणि ॥ २ ॥

तमांसि हत्वा जगतः पदार्थान्
प्रकाशयन्तं यमिव प्रदीपम
ननाश मोहादभिपत्य कामः
पतङ्गवच्छान्तिजिनं भजे तम् ॥ ३ ॥

अबोधकालोरगलीढमूढ-
मबूबुधद् गारुडरत्नवद् यः ।

G, P. T. 1502, 500. 12-9-1105. B

जगत् कृपाकोमलदृष्टिपातैः
प्रभुः प्रसद्यान्मुनिसुव्रतो नः ॥ ४ ॥

त्रासादिदोषोज्झितमुद्धजातिं
गुणान्वितं मौलिमणिं यथैव ।
वृत्तात्मकं भावलयाभिरामं
कृतक्रियं मूर्ध्नि दधामि वीरम् ॥ ५ ॥

स्वार्थप्रकाशिद्युतयोऽशरीरा
रत्नप्रदीपा इव मे वसन्तु ।
तमःप्रहाण्यै हृदि दीप्यमानाः
कृताधिवासाः पवनान्तरेऽपि ॥ ६ ॥

निराकृतान्तस्तमसो निषेव्या
दिगम्बरैः सन्ततवृत्तदेहाः ।
सुनिर्मलाः साधुसुधांशवो मे
हरन्तु सन्तापमदृष्टपूर्वाः ॥ ७ ॥

रत्नत्रयात्मा सुचिराय धर्मः
सार्थेन नाम्ना महितः स जीयात् ।
यो धारयत्यच्युतधाम्नि मग्ना-
नुद्धृत्य सत्त्वान् भववारिराशेः ॥ ८ ॥

वीरादिव क्षीरनिधेः प्रवृत्ता
सुधेव वाणी सुधिया कलश्या ।
विधृत्य नीता विबुधाधिपैर्मे
निषेविता नित्यसुखाय भूयात् ॥ ९ ॥

भट्टाकलङ्काद् गुणभद्रसूरेः
समन्तभद्रादपि पूज्यपादात् ।
वचोऽकलङ्कं गुणभद्रमस्तु
समन्तभद्रं मम पूज्यपादम् ॥ १० ॥

वीराकरोत्थं मुनिसार्थनीतं
कथामणिं श्रीमुनिसुव्रतस्य ।
सुवर्णदीप्रं नवयुक्तिरम्यं
विदग्धकर्णाभरणं विधास्ये ॥ ११ ॥

सरस्वतीकल्पलतां स को वा
संवर्धयिष्यन् जिनपारिजातम् ।
विमुच्य काञ्जीरतरूपमेषु
व्यारोपयेत् प्राकृतनायकेषु ॥ १२ ॥

गणाधिपस्यैव गणेयमेतद्
भवामि चोद्यन् भगवच्चरित्रे ।
भक्तीरितो नन्वगचालनेऽपि
शक्तो न लोके ग्रहिलो न लोकः ॥ १३ ॥

मनः परं क्रीडयितुं ममैतत्
काव्यं करिष्ये खलु बाल एषः ।
न लाभपूजादिरतः परेषां
न लालनेच्छाः कलभा रमन्ते ॥ १४ ॥

श्रव्यं करोत्येष किल प्रबन्धं
पौरस्त्यवन्नेति हसन्तु सन्तः ।

किं शुक्तयोऽद्यापि महापराध्यं
मुक्ताफलं नो सुवते विमुग्धाः ॥ १५ ॥

प्रबन्धमाकर्ण्य महाकवीनां
प्रमोदमायाति महानिहैकः ।
विधूदयं वीक्ष्य नदीन एव
विवृद्धिमायाति जडाशया न ॥ १६ ॥

उपेक्षितारोऽपि फलन्त्यनिष्टा-
भीष्टानि यद् दुर्जनसज्जनास्तत् ।
वृथा कृता विश्वसृजा श्रमाय
विषद्रुकल्पद्रुमयोर्हि सृष्टिः ॥ १७ ॥

सन्तः स्वभावाद् गुणरत्नमन्ये
गृह्णन्ति दोषोपलमात्मकीयम् (?) ।
यथा पयोऽस्नं शिशवो जलूका
जनो वृथा रज्यति कुप्यतीह ॥ १८ ॥

तिक्तोऽस्ति निम्बो मधुरोऽस्ति चेक्षुः
स्वं निन्दतोऽपि स्तुवतोऽपि तद्वत् ।
दुष्टोऽप्यदुष्टोऽपि ततोऽनयोर्मे
निन्दास्तवाभ्यामधिकं न साध्यम् ॥ १९ ॥

यद् वर्ण्यते जैनचरित्रमत्र
चिन्तामणिर्भव्यजनस्य यच्च ।
हृद्यार्थरत्नैकनिधिः स्वयं मे
तत् काव्यरत्नाभिधमेतदस्तु ॥ २० ॥

यत् स्थापनां नाम भुवं च कालं
 द्रव्यं च भावं प्रति षट्प्रकारा ।
स्तुतिर्जिनस्य क्रियतेऽत्र तस्मात्
 काव्यं ममैतत् स्तुतिरेव भूयात् ॥ २१ ॥

अथास्ति जम्बूविटपिच्छलेन
 द्वीपेषु [1]गर्वोन्नतमस्तकस्य ।
द्वीपस्य भर्माभरणेऽत्र खण्डे
 रत्नायमानो मगधाख्यदेशः ॥ २२ ॥

यद्भूधरा भूतलसेव्यपादा
 भूपा इवाक्रान्तदिगन्तरालाः ।
इन्दन्ति मत्तद्विपकैरवाक्षि-
 कस्तूरिकाकाञ्चनरत्नखड्गैः ॥ २३ ॥

नगेषु यस्योन्नतवंशजाताः
 सुनिर्मला विश्रुतवृत्त[2]रूपाः ।
भव्या भवन्त्याप्तगुणाभिरामा
 मुक्ताः सदा लोकशिरोविभूषाः ॥ २४ ॥

उत्तुङ्गगोत्रप्रभवा भवत्यो
 भजन्तु भूचक्रबहिष्कृतं किम् ।
इति स्रवन्तीरुदधिं सरन्ती-
 रवैमि यत्रालिगणो रुणद्धि ॥ २५ ॥

तरङ्गिणीनां तरुणान्वितानां-
 मतुच्छपद्मच्छदलाञ्छितानि ।

---

१. 'वर्गोन्न' क. पाठः. २. 'देहाः ।' ख. पाठः.

पृथूनि यस्मिन् पुलिनानि रेजुः
काञ्चीपदानीव नखाञ्चितानि ॥ २६ ॥

तमोनिवासेषु वनेषु यस्य
मरन्दसा(द्रौ ? न्द्रा)स्तरणेर्मयूखाः ।
स्फुरन्ति शाखान्तरलब्धमार्गाः
कुन्ताः प्रयुक्ता इव शोणितार्द्राः ॥ २७ ॥

अभ्रंलिहाग्राणि वनानि यस्मि-
न्नीयुर्ध्रुवं नाकतरुं निकर्तुम् ।
को दानवारिप्रतिपन्नवृत्तेः
क्षमेत सङ्कल्पितदानगर्वम् ॥ २८ ॥

पाकावनम्राः कलमा यदीयाः
पदावनम्रा इव मातृभक्त्या ।
आघ्रायमाणाः स्वशिरस्सु भान्ति
विकासिपद्माननया धरित्र्या ॥ २९ ॥

विभान्ति सस्यान्तरितानि यस्मिन्
हेमारविन्दानि मधूल्बणानि ।
आपाययन्त्या इव शालिपुत्रा-
नात्तानि धात्र्याः करसेचनानि ॥ ३० ॥

यत्रेक्षुदण्डाः कुसुमाभिरामा
वितन्वते पर्वचयाञ्चिताङ्गाः ।
मनोजराजस्य जगज्जिगीषो-
रुच्चामरोड्डामरकुन्तलीलाम् ॥ ३१ ॥

---

१. 'स्मिन् म', २. 'चि' ख. पाठः.

भूदेवता यद्विभवं विलोक्य
भूयोऽवधूतत्रिदिवं दधाति ।
निलीनभृङ्गस्थलपद्मदम्भा-
न्निष्पन्दताराणि विलोचनानि ॥ ३२ ॥

यस्योर्वरासारगुणस्य मूर्ताः
पुञ्जा इवाभान्ति समन्ततोऽपि ।
तिलातसीकोद्रवमुद्गमाष-
गोधूमवल्लक्षवशालिशैलाः ॥ ३३ ॥

यत्रार्तवत्त्वं फलिताटवीषु
पलाशिताद्रौ कुसुमे परागः ।
निमित्तमात्रे पिशुनत्वमासी-
न्निरोष्ठ्यकाव्येष्वपवादिता च ॥ ३४ ॥

स्त्रीणां कचे माल्यमुरोजभारे
श्यामाननत्वं जघने जडत्वम् ।
अपाङ्गता केवलमक्षिसीम्नो-
र्मध्यप्रदेशेषु च नास्तिवादः ॥ ३५ ॥

भुजङ्गमेष्वागमवक्रभावो
भुजङ्गहारेऽप्यजिनानुरागः ।
ध्रुवं प्रदोषानुगमो रजन्याम्
(दि ? इ)नक्षयः सोऽपि दिनोवसाने ॥ ३६ ॥

तत्रास्ति सा राजगृहाभिधाना
पुरी वनैः पृष्ठगतैरुदग्रैः ।

---

१. 'माषमुद्गगो', २. 'वा' ख. पाठः.

पुरारिवैरप्रतिकारहेतो-
यां मुक्तकेशव्रतमादितेव ॥ ३७ ॥

बहिर्वणे[1] यत्र विधाय वृक्षा-
रोहं परिष्वज्य समर्पितास्याः ।
कृताधिकारा इव कामतन्त्रे
कुर्वन्ति सङ्गं विटपैर्व्रतत्यः ॥ ३८ ॥

आरामरामाशिरसीव केली-
शैले लताकुन्तलभासि यत्र ।
सकुङ्कुमा निर्झरवारिधारा
सीमन्तसिन्दूरनिभा विभाति ॥ ३९ ॥

कण्डूतिशान्त्यै निजकर्णमूलं
सङ्घर्षयन्तः सरसीषु मीनाः ।
अम्भोजदण्डेषु विभान्ति यस्या-
मालानदण्डे[2]ष्विव हस्तिपोताः ॥ ४० ॥

वीथ्या हयानां दशया गजानां
श्रमैर्भटानां करणैर्नटानाम् ।
भुजाहतैर्मल्लगणस्य यस्या
जयन्ति बाह्यालिभुवो विशालाः ॥ ४१ ॥

अहो नु तीरद्रुमराजिराज-
द्विचित्रपुष्पोद्गमबिम्बितानि ।
उतोल्लसत्पन्नगभोगरत्न-
द्युतीनि यस्याः परिखाजलानि ॥ ४२ ॥

---

१. 'ने', २. 'बन्धेष्वि' क. पाठः.

माणिक्यकुम्भोज्ज्वलगोपुराणां
रूपेण यां मूर्तिचतुष्टयाप्तः ।
आप्तः समालक्ष्य विलक्षमास्ते
पूर्वाचलः कूटविभासिभास्वान् ॥ ४३ ॥

सुरापगापूरकृतान्तराणि
शृङ्गाणि सालाग्रगतानि यस्याः ।
हैमानि हेमाम्बुरुहाणि बुद्ध्वा
मुग्धा जिहीर्षन्ति सुरर्षिकान्ताः ॥ ४४ ॥

प्रतप्तचामीकरवैकृतानि
प्राकारशीर्षाणि पुनर्न यस्याः ।
पत्या दिशां भित्तिषु लिप्तशेषाः
प्रतापपिण्डा वियदङ्गणे ते ॥ ४५ ॥

उत्तोरणानां किल मन्दिराणा-
मुद्यद्ध्वजानामसमेषु यस्याः ।
धनुष्मतो वारिभृतः सशम्पान्
निर्माय निर्माय नभः प्रमार्ष्टि ॥ ४६ ॥

यच्चन्द्रकान्तोपलमन्दिराणां
ज्योत्स्नाप्रवाहैः परिवाहिता द्यौः ।
क्रीडाधियामप्सरसां विधत्ते
दिवा दिवा दिव्यसरःप्रमोषम् ॥ ४७ ॥

ताराफलायां वियदामलक्यां
क्षेप्तुं व्रजन्तं नतदारुबुद्ध्या ।

यच्चन्द्रशालागतबालचन्द्रं
बालं हसन्ति स्फुटमीशदाराः ॥ ४८ ॥

नैतानि ताराणि नभस्सरस्याः
सूनानि तान्याददते[1] सुकेश्यः ।
यदुच्चसौधाग्रजुषो मृषा चेत्
प्रगे प्रगे कुत्र निलीनमेभिः ॥ ४९ ॥

विकासिनेत्रांशुभिरङ्गनानां
विषक्तगात्रै[2]रवसक्तगात्राः ।
विलासिनां सूचिगृहान्धकारा
वितन्वते यत्र सदा नियुद्धम् ॥ ५० ॥

सदा पठत्कोकिलनन्दनाढ्याः
समुल्लसत्पाण्डुकभद्रशाला[3]ः ।
जिनालयाः सौमनसालयास्ते
जयन्ति मेरूनपि यत्र चित्रम् ॥ ५१ ॥

यत्राश्मगर्भार्कजिनालयत्विट्-
छन्नेऽभ्रमध्ये तपनो हठेन ।
दूर्वाम्बुबुद्ध्या द्रवदश्वरोध-
क्लेशासहः किं कुरुतेऽयने द्वे ॥ ५२ ॥

चित्रं जिनेन्द्रावसथस्थलेषु
प्रमोदबाष्पोदकपिच्छिलेषु ।

---

१. 'ध', २. 'रि', ३. 'सा' क. पाठः.

भव्यैः किलोप्ताः सिततण्डुलौघाः[1]
फलन्ति यस्यां बहुशः फलानि ॥ ५३ ॥

देवीनां मणिगृहमध्यवर्त्तिहैम-
प्रासादे सदलसकर्णिकाम्बुजाभे ।
आवासे यदधिभुवः कृताधिवासा
श्रीरासीद् ध्रुवमरविन्दमन्दिरा सा ॥ ५४ ॥

इत्यर्हद्दासकृतौ काव्यरत्ने भगवदभिजनवर्णनो नाम
प्रथमः सर्गः ॥

---

## अथ द्वितीयः सर्गः ।

अथाभवत् तस्य पुरस्य राजा
सुमित्र इत्यन्वितनामधेयः ।
क्रियार्थयोः क्षेपणपालनार्थ-
द्वयादसत्सद्विषयात् सुपूर्वात् ॥ १ ॥

यं राजशब्दासहमन्यपुंसि
श्रुत्वा भयाढ्यः सुखरोचिरासीत् ।
स्तुतिप्रसक्ताः कवयो बभूवु-
र्यक्षोऽपि सत्यं धनदो बभूव ॥ २ ॥

कोपारुणेऽप्यक्षणि यस्य चित्रं
सकञ्चुकैः कुण्डलिभिः सनाथम् ।
शिवास्पदं काञ्चनवज्रपूर्णं
बभूव सर्वं नगरं रिपूणाम् ॥ ३ ॥

---

१. 'लास्ते फं' क. पाठः.

प्रयाणभेरीश्रवणेन यस्य
पलायमानानरिभूमिपालान् ।
पदाभिघाताक्षमयेव सद्यः
प्रकाशयामास समीरकेतुः ॥ ४ ॥

येनासिना युद्धशिरस्यरीणां
साङ्ग(च्छि ? च्छ)दे चर्मणि[1] रक्तधारा ।
विनिर्यती तेन पथा व्यराजी-
दुद्भूतकोपाग्निशिखेव तेषाम् ॥ ५ ॥

रणेषु खड्गः करिकुम्भमुक्ता-
संपृक्तधारोऽनुचकार यस्य ।
विदारिते वक्त्रबिले विधातु-
र्विधुन्तुदस्येन्दुकुटुम्बकानाम् ॥ ६ ॥

कृपाणभिन्नैर्युधि वैरिवीरै-
र्विभिन्नबिम्बे सति यस्य भानौ ।
स्वयं भयेनैव बभूव भिन्नः
शशी नचेदद्य बिली किमेषः ॥ ७ ॥

बाहौ यदीयेऽर्थिसुरद्रुमेऽपि
मन्येऽसियष्टिं विषवल्लिमन्याम् ।
नो चेत् तया वैरिणि वेष्ट्यमाने
किं तेपिरे तस्य कुटुम्बकानि ॥ ८ ॥

यस्य प्रतापाग्निशिखावलीढं
सर्वं जगत् सत्यमिदं वदामि ।

---

१. 'व' क. पाठः.

नेदं द्विषो यं यमगुः प्रदेशं
　　तप्ता बभूवुः किमु तत्र तत्र ॥ ९ ॥

यस्यासिधाराविनिपातभीता-
　　स्त्यजन्तु पद्माकरसङ्गमानि ।
विमुक्तवन्तः किल राजहंसाः
　　स्वमुत्तराशाश्रितमानसं च ॥ १० ॥

तेजोनले व्याप्तसमस्तकाष्ठे
　　तत्र स्थितिं कर्तुमशक्नुवानाः ।
यस्यारयो वारिधिवासमापु-
　　र्नचेत् तथा के किल वारिमर्त्याः ॥ ११ ॥

उपायनाश्वेभखुरप्रहार-
　　मदाम्बुनिम्नीकृतपूर्णमध्यम् ।
रत्नाङ्कणं यत्सदसो विशालं
　　क्रीडासरोवद् विरराज लक्ष्म्याः ॥ १२ ॥

प्राणेश्वरी तस्य बभूव राज्ञः
　　पद्मावती नाम नरेन्द्रकन्या ।
ययाधिविन्नाजनि भूतधात्री
　　या चाधिविन्नाजनि भूरिलक्ष्म्या ॥ १३ ॥

लावण्यवाराशितरङ्गकल्प-
　　लतां नृपस्त्रीमवलोक्य शङ्के ।

---

१. 'मन्ये' । ०' ख. पाठः.

तत्काम्यययाद्यापि करोति लक्ष्मी-
स्तपोऽम्बुमध्ये कमलासनस्था ॥ १४ ॥
निशाकरस्फेटनिभानि तन्व्या
नखानि पादाङ्गुलिसङ्गतानि ।
जगज्जिगीषोर्मकरध्वजस्य
प्रपेदिरे खेटकभल्लकत्वम् ॥ १५ ॥
स्वर्गापगारक्तसरोरुहाणां
सजातमेतद्वयमित्यवैमि ।
सुराङ्गनानां कथमन्यथा स्तां
च्चिराय सेव्यौ चरणौ मृगाक्ष्याः ॥ १६ ॥
सपर्वरम्भासदृशोस्तदूर्वोः
सजङ्घयोरङ्गजकाहला का ।
कियांश्च पञ्चायुधपृष्ठतूणः
कियत्तरौ मन्मथदन्तिदन्तौ ॥ १७ ॥
परिस्फुरत्काञ्चनकाञ्चिबन्धं
निबद्धनीवीविलसद्दुकूलम् ।
कलत्रभारं कलिकायुधोऽस्या-
श्चकार वास्त्रं किल चक्रयानम् ॥ १८ ॥
वलित्रयत्रासतरङ्गितेऽस्या
विलग्नसौन्दर्यमहाम्बुराशौ ।
उपर्युदस्तस्तनशैलतर्क्यो[1]
रराज सेतुर्नवरोमराजिः ॥ १९ ॥

---

१. 'र्यघस्त' क. पाठः.

भुजायता चम्पकमालिका स्यात्
कुचोन्नतः पङ्कजकुड्मलश्च ।
मृदुत्वकाठिन्यगुणौ मृगाक्ष्याः
कथं दधीतोभयमप्युभय्याः ॥ २० ॥

शुभेन रेखात्रितयेन तन्व्याः
कण्ठः स्फुटं कम्बुसमान एव ।
सुधासदार्द्रेण पुनः स्वरेण
विपञ्चिकाप्यञ्चत एव तस्य ॥ २१ ॥

यदब्जसौन्दर्यसखं मुखं च
यदम्बके मीनविडम्बके च ।
नभःश्रियः साम्यमुपागता या
सरःश्रियः साम्यमितो गता सा ॥ २२ ॥

त्रिलोकनारीतिलकस्य तस्याः
क्व केशपाशस्य पुरो भवामः ।
इतीदमद्याप्यभिनेतुमेते
सधूतयश्चामरवालहस्ताः ॥ २३ ॥

मनोजसंमोहनमन्त्रचिन्ता-
फलं नु भूपालतपःफलं नु ।
जनेक्षणादृष्टफलं नु किञ्चि-
न्न वेद्मि सृष्टेः[२] कलशाकृतिः सा ॥ २४ ॥

निर्मूलिताशेषविपक्षकक्षो
निराकुलीभूतसमस्तभूतः ।

---

१. 'मुपाग', २. 'ष्टिः' क. पाठः.

युवा स पुष्पायुधबाणकोण-
व्यधात् परं व्याकुलमानसोऽभूत् ॥ २५ ॥

कुलागते वर्[1]मणि दृष्टशौचे
स[2] मन्त्रिवर्गेऽर्पितराज्यभारः ।
तया समं मन्मथशासनानि
बभार भावातिमनोहराणि ॥ २६ ॥

अगायदेषा स ततान तान-
मनृत्यदेषा स तताड तालम् ।
अवादयद् वल्लकिकामथैषा
स वल्लकीवानुजगौ द्वितीया ॥ २७ ॥

सह प्रयातौ दयितौ वनान्तं
सह प्रियौ केलिसरः प्रविष्टौ ।
सहाधिरूढौ रमणौ च दोलां
सह स्थितौ सौधशिरस्सु कान्तौ ॥ २८ ॥

उरोजयोरेणमदेन तन्व्याः
कुतूहली यं मकरं लिलेख ।
विभावयामास स भावयोनेः
स्थूलाग्रजाग्रन्मकरध्वजस्य ॥ २९ ॥

सखीसभायां चतुरङ्गकेलौ
चुचुम्ब संरक्षितुमाद्दतस्य ।
हयस्य याच्ञाकपटेन कामी
मुहुर्मुहुः स्मेरमुखीं कपोले ॥ ३० ॥

---

१. 'र्ष' ख. पाठः. २. 'सु' क. पाठः.

मुक्तागुणच्छायमिषेण तन्व्या
रसेन लावण्यमयेन पूर्णे ।
नाभिहृदे नाथनिवेशितेन
विलोचनेनानिमिषेण जज्ञे ॥ ३१ ॥

अमर्षणायाः श्रवणावतंस-
मपाङ्गविद्युद्विनिवर्तनेन ।
स्मेरेण कोशादवकृष्यमाणं
रथाङ्गमुर्वीपतिराशशङ्के ॥ ३२ ॥

रहस्सु वस्त्राहरणे प्रवृत्ताः
सहासगर्जाः क्षितिपालवध्वाः ।
सकोपकन्दर्पधनुःप्रमुक्त-
शरौघहुङ्काररवा इवासुः ॥ ३३ ॥

इति किलाभिमतौ सुरदम्पति-
प्रतिमरूपकलागुणशालिनौ ।
विविधकेलिरसैः कृतसम्मदैः
सफलतां युवतामुपनिन्यतुः ॥ ३४ ॥

इत्यर्हद्दासकृतौ काव्यरत्ने भगवत्पितृवर्णनो नाम
द्वितीयः सर्गः ॥

---

अथ तृतीयः सर्गः ।

एषैकदा तु नवकल्पलतेव भूयो-
भूयः प्रपन्नऋतुकापि फलेन हीना ।

---

१. 'किल स' क. पाठः.

आलोक्य केलिकलहंसवधूं सगर्भां
दध्यौ धराधिपवधूरिति दीनचेताः ॥ १ ॥

आः पुष्पितापि विफलेव रसालयष्टिः
सेनेव नायकगतापि जयेन शून्या ।
काले स्थितापि घनराजिरवर्षणेव
मिथ्या दधामि हतकुक्षिमदृष्टतोका ॥ २ ॥

चिन्ताभरादिति वहन्नयनोदकां तां
कान्तोऽनुसद्य करपल्लवदत्तगण्डाम् ।
व्यग्रीभवत्परिजनादवगम्य सर्व-
माश्वासयत्युचितसूक्तिरसेन यावत् ॥ ३ ॥

तावत् तमम्बरतलादवतीर्य देव्यो
मित्रं दिने नमितया रमया समेतम् ।
मुक्त्वा श्रिया सततसङ्गतया सनाथं
भक्तुं सुमित्रामिव दीधितयोऽधिजग्मुः ॥ ४ ।

भूपोऽथ जीवजयनन्दपदास्पदास्या-
स्ताः प्राञ्जलीरभिनिरीक्ष्य विलक्षचक्षुः ।
प्राप्तासनेषु विनिवेश्य मुदेदमूचे
प्राप्ताः किमत्र सुरलोकसुखैकसाराः ॥ ५ ॥

आकर्ण्य वाचमिति तस्य सुराङ्गनाभिः
श्रीरीरिताकथयदागमहेतुमेवम् ।
मन्दस्मिताद्विगुणमञ्जुलवाक्प्रसूनै-
र्वत्स्यत् फलं क्षितिपतेरिव सूचयन्ती ॥ ६ ॥

भूपार्यखण्ड इह भूविदितेऽङ्गदेशे
चम्पापुरे नृपवरो हरिवर्मनामा ।
आसीद् यशःकवचितावनिरस्त्रधारा-
संप्लाविताऽरिनृपतद्वनितावितानः ॥ ७ ॥

ज्ञात्वा जिनाज्जननदुःखमनन्तवीर्या-
देषोऽवगीतभवभोगशरीररोगः ।
मत्वा तृणाय निजराज्यपदं मनीषी
तत्पादयोः किल बभार जिनेन्द्रमुद्राम् ॥ ८ ॥

सन्त्यक्तसर्वविषयोऽप्यवरोधमुक्तो-
ऽप्येकाक्षरक्षणपरोऽप्यनिशं यतीशः[2] ।
संभक्तसर्वविषयोऽजनि सावरोधः
पञ्चाक्षनिग्रहपरः परमेष चित्रम् ॥ ९ ॥

कुर्वंस्तपो[3] जिनानि[4]रूपितलक्ष्मलक्ष्मी-
भूतं प्रभूतविनयो विविधं मुनीन्द्रः ।
एकादशाङ्गकुशलोऽजनि हेतुयुग्म-
सामग्र्यसञ्जनिततीर्थकरत्वपुण्यः ॥ १० ॥

अन्ते समाधिविधिसात्कृतदेहभारः
स्वः प्राणते तदभिधानविमानमध्ये ।
स प्राणतेन्द्र इति सेन्द्रपतिर्बभूव
लोकेषु तप्ततपसां किमसाध्यमस्ति ॥ ११ ॥

मासानतीत्य षडयं गुडनिर्विशेषी-
भूतेतविंशातिनदीपतिसम्मितायुः ।

---

१. 'म्बा', २. 'दी', ३. 'नो' क. पाठः. ४. 'ज' ख. पाठः.

सूनुर्भविष्यति च तेऽतुलपुण्यराशे-
स्तीर्थस्य विंशतितमो भविता च कर्ता ॥ १२ ॥

तस्माद् वयं जिनपतेर्भुवनैकवन्द्य-
पादारविन्दयुगलस्य भविष्यतोऽग्रे ।
दास्यं विपुण्यजनदुर्लभमद्य याता
मातुर्विधातुममरेश्वरशासनेन ॥ १३ ॥

इत्थं तदीयमुखचन्द्रमसः समुद्यद्-
वाक्चन्द्रिकां श्रुतिपुटेन निपीय सद्यः ।
चेतस्यवाप चपलेक्षणया समेतो
भूपश्चकोर इव भूरितरप्रमोदम् ॥ १४ ॥

भूमीपतेरनुमताभिरथामराणां
भ्रूवल्लरीविलसनेन विलासिकाभिः[1] ।
भूपालमौलिदयिता भृतसंमदाभि-
र्भूलोकसेव्यचरणाम्बुरुहा सिषेवे ॥ १५ ॥

साधः कयापि विधृतस्य सुरेन्द्रनील-
च्छत्रस्य चारुवलयस्य महौषधीव ।
रेजे प्रकाण्डरुचिरस्य सुरद्रुमस्य
धारान्तरस्य च घनस्य तटिल्लतेव ॥ १६ ॥

दिव्याङ्गनावधुतचामरलालिताङ्गा
तिष्ठन्त्यसावरुचदुन्नतरत्नपीठे ।
लक्ष्मीः सुधाब्धिचटुलोर्मिहतेव शेषे
चान्द्री कलेव शरदभ्रचितोदयाद्रौ ॥ १७ ॥

---

१. 'स' ख. पाठः.

सा कुङ्कुमेन परया कुचयोर्विलिप्ता
कर्पूरक्लृप्ततिलका निटिले चकाशे ।
संबद्धकुन्तलभरा शिरसि द्विरेफ-
व्याप्तेव पल्लवितपुष्पितकल्पवल्ली ॥ १८ ॥

तस्याः शिरोरुहभरे विनियोज्यमानं
कृष्णं कथापि भ्रमरीरुहमावभासे ।
तापिञ्छकच्छमुपसर्गदिवान्धकारं
नीलाब्जकुञ्जमुपयान्निव भृङ्गराशिः ॥ १९ ॥

कर्पूरमौक्तिकखगेन्द्रमणिप्रक्लृप्तै-
स्ताटङ्कहारवलयैरपरोपनीतैः ।
डिण्डीरितः क्वचन बुद्बुदितः परत्र
शैवालितः क्वचिदहो सुषमाब्धिरस्याः ॥ २० ॥

वामे फलव्यवहिते व्यरुचत् कुचोऽन्य-
स्तन्त्रीविवादनचलस्त्रिदशाङ्गनायाः ।
वक्त्रेन्दुना सहचरीमभिशङ्क्य याता-
मुत्कम्पमान इव कान्तिझरीरथाङ्गः ॥ २१ ॥

ताभिर्यथावसरमित्थमुपास्यमाना
सानीततुर्यवसना किल तीर्थतोयैः ।
शुभ्राम्बराभरणमाल्यविलेपना च
शिश्ये सुखेन रमणेन समानतल्पा ॥ २२ ॥

नागं वृषाधिपगजारिरमाश्च माले
चन्द्रार्कमीनयुगकुम्भयुगानि वापीम् ।

अम्भोनिधिं च हरिपीठविमानभोगि-
स्थानानि रत्ननिकरं च विधूममग्निम् ॥ २३ ॥

स्वप्नेऽथ सा सदृशताप्रणयादिवेता-
नेतान् गजेन्द्रगतिराप्तवृषाधिपत्वा ।
शातोदरी सविभवा सुकुमारगात्री
चन्द्रानना सकलविष्टपसेव्यपादा ॥ २४ ॥

मीनेक्षणा घटकुचा ह्रदनिम्ननाभि-
गाम्भीर्यपर्यवसितिः सुनितम्बपीठा ।
मानोन्नता च कृतभोगिपतिप्रमोदा
चेतस्विरत्नममला क्रमशो ददर्श ॥ २५ ॥

राज्ञी विबुध्य सुरवल्लभिकासुगीतैः
कादम्बिनीकलकलैरिव केकिकान्ता ।
उत्थाय तल्पतलतः सुसमाप्य कृत्यं
प्राभातिकं सपदि वल्लभमाससाद ॥ २६ ॥

अर्धासने प्रियनिवेशितवल्लभायै
स्थित्वा क्षणं श्रुतिसुखं विनिवेदितायाः ।
स्वप्नावलेरिति जगाद फलं कुचान्ते
दन्तार्चिषा विरचयन्निव चर्चिकां सः ॥ २७ ॥

नागेन तुङ्गचरितो वृषतो वृषात्मा
सिंहेन विक्रमधनो रमयाधिकश्रीः ।
स्रग्भ्यां धृतश्च शिरसा शशिना क्लमच्छित्
सूर्येण दीप्तिमहितो झषतः सुरूपः ॥ २८ ॥

कल्याणभाक् कलशतः सरसः सरस्तो
गम्भीरधीरुदधिनासनतस्तदीशः ।

देवाहिवासमणिराश्यनलैः प्रतीत-
देवोरगागमगुणोद्गमकर्मदाहः ॥ २९ ॥

एवंविधस्तव भविष्यति तीर्थकर्ता
पुत्रो जगत्त्रयविनेयजनैकमित्रम् ।
मर्त्यामरोरगखगप्रमदातिशायि-
पुण्यातिशायनघनायितचारुमूर्ते ! ॥ ३० ॥

एतन्निशम्य वचनं रुचितस्य देवी
रोमाञ्चकञ्चुकितचञ्चुरगात्रयष्टिः ।
आकर्णितान्यभृतमञ्जुरवा वनान्ते
माकन्दवल्लिरिव कोरकिता बभूव ॥ ३१ ॥

देवोऽथ पूर्वगदितास्त्रिदिवादुपेतो
देव्या वपुः करिवपुर्वदनादविक्षत् ।
पक्षेऽपरे नभसि मासि तिथौ द्वितीये
योगे शिवे श्रवसि भे विरतौ रजन्याः ॥ ३२ ॥

विज्ञायासनकम्पतः सुरपतिस्तस्यावतारं प्रभोः
स्वर्गादेत्य चतुर्विधैः सह सुरैरस्याम्बिकां कल्पजैः ।
आकल्पाम्बरगन्धमाल्यनिवहैरभ्यर्च्य नामं स्तवं
गानं नर्तनमारचय्य जनकं चादृत्य भूयो गतः ॥ ३३ ॥

इत्यर्हद्दासकृतौ काव्यरत्ने भगवद्गर्भावतरणवर्णनो नाम
तृतीयः सर्गः ॥

---

१. 'र' क. पाठः.

## अथ चतुर्थः सर्गः ।

न्यग्रोधशाखेव रराज सान्द्र-
 च्छायां[1] दधाना पुरुषोत्तमं तम् ।
पत्रोदरेऽथार्तवमुष्णशीत-
 मुच्चैः[2]स्तनीयं नुदती प्रियस्य ॥ १ ॥

सा गर्भिणी सिंहकिशोरगर्भा
 गुहेव मेरोरमृतांशुगर्भा ।
वेलेव सिन्धोः स्मृतिरत्नगर्भा
 रेजेतरां हेमक[3]रण्डिकेव ॥ २ ॥

वल्ली वसन्तात् सरसी घनान्तात्
 सम्पन्नयाच्चन्द्रमसोऽब्धिवेला ।
यथा तथाजायत सा कृशाङ्गी
 गर्भार्भकादुज्ज्वलरूपसम्पत् ॥ ३ ॥

जिनस्य माहात्म्यपदेन हृष्टौ
 सामीप्यलाभेन कुचौ तदीयौ ।
न बभ्रतुः श्यामलतां मुखेऽन्या-
 मप्येष नो हर्षयतीह कांस्कान् ॥ ४ ॥

सुतस्य गम्भीरतरस्य सङ्गात्
 तस्योदरिण्या अपि राजपत्न्याः ।
नाभिर्न तत्याज गभीरभावं
 गुणं त्यजेत् को गुणिसङ्गमेन ॥ ५ ॥

---

१. 'यं', २. 'री' क. पाठः. ३. 'ण्ड' ख. पाठः.

गर्भेऽपि बोधत्रयनायकोऽय-
मितीदमावेदयितुं किलास्याः ।
वलिप्रभावाद् वलयो न नष्टाः
सनाभिनाशं भुवि के सहन्ते ॥ ६ ॥

तत्सङ्गमे सर्वसमृद्धिहेतौ
निरन्तरं सत्यपि कुक्षिरस्याः ।
समृद्धिमल्पामपि न प्रपेदे
भाग्यानुसारीणि फलानि कामम् ॥ ७ ॥

स्मरज्जनानामपि नाशयन्त-
मन्तस्तमो नूतनरत्नदीपम् ।
साक्षाद् दधत्या जिनमन्तरस्याः
स्प्रष्टुं तमो नैष्ट भियेव जातु ॥ ८ ॥

गर्भस्य लिङ्गं परमाणुकल्प-
मप्येतदङ्गेष्वनवेक्ष्य रक्षी ।
जगत्त्रयोद्धारणदोहदेन
परं नराणां बुबुधे ससत्त्वाम् ॥ ९ ॥

सम्बन्धदुःखाखिलजीवमुक्ते-
र्हेतुं तमक्षार्थगतस्पृहं च ।
प्रसोष्यती तेन समाभवत् सा-
प्युपाधिवत् स्वच्छतरं हि वस्तु ॥ १० ॥

गुणान्वितोऽपास्ततमःप्रपञ्चः
प्रकाशितात्मेतरवस्तुरेषः ।

---

१. 'म' क. पाठः.

बभौ जिनेन्द्रो जठरे जनन्या
दीपो यथा स्फाटिकपात्रमध्ये ॥ ११ ॥
तद्गर्भवासे निवसन्नपीशः
स भास्वराङ्गो निहतान्धकारः ।
तत्याज बोधत्रितयं न तेज-
स्त्यजेत् करण्डेऽपि मणिर्महार्घः ॥ १२ ॥
मासान्[1] पुरे पञ्चदशानुसन्ध्यं
बन्धुर्महेशस्य वसून्यवर्षत् ।
सौधा यदंशुच्छुरिता विरेजुः
शैला यथा कर्बुरिताभ्रलिप्ताः ॥ १३ ॥
स्वनामसार्थीकरणाय भक्ति-
च्छलेन गत्वातिबलेन राज्ञा ।
विधित्सितं पुंसवनादिकर्म
पुरेव शक्रः स्वयमस्य चक्रे ॥ १४ ॥
मुग्धामरीगानसुधानिपान-
मुदश्छलान्मीलितचक्षुरेषा ।
विचिन्वती क्षेमवतोऽपि सूनोः
क्षेमित्वमायात् समयं प्रसूतेः ॥ १५ ॥
अवाप्य चैत्रासितपक्षपूर्णा-
मथो तिथिं सश्रवणामसूत ।
असावहम्पूर्विकयेव सूनुं
भानुं यदै[2]वेन्द्रदिशा तदै[3]व ॥ १६ ॥

१. 'त्' ख. पाठः. २., ३. 'थै' क. पाठः.

बभुः स्त्रियस्तं निहतान्धकारं
नवोदितं विश्वजनैकमित्रम् ।
विलोकयन्त्यः सरसीव सौधे
फुल्लाक्षिपद्मा इव पुष्करिण्यः ॥ १७ ॥

गृहान्तराले शशिकान्तभित्ति-
त्विषैव निर्वान्ततमःप्रपञ्चे ।
सुराङ्गना कापि तदा प्रदीपा-
नबोधयत् केवलमङ्गलार्थम् ॥ १८ ॥

हतान्धकारेऽपि शिशुप्रभावाद्
गृहोदरे तद्द्युतिपूर्णमेतत्
अजानती काचन रत्नदीपा-
नतिष्ठिपद् भक्तिभरेण मुग्धा ॥ १९ ॥

अरिष्टहर्म्यस्य सवज्रवेदे-
र्बालाङ्गनीलद्युतिपूरितस्य ।
मध्ये विरेजुर्नवदीपमाला
माला मणीनामिव वारिराशेः ॥ २० ॥

कुमारजन्मादिमवार्तकर्त्रै
कृताङ्गभूषो हृषितः क्षितीन्द्रः ।
विधूतपत्रोद्गतकोरकस्य
विधामधात्रीपतरोर्मुहूर्तम् ॥ २१ ॥

गन्धाम्बुसिक्ता विरजाः पुरश्रीः
श्रीखण्डपङ्केन विलिप्तदेहा ।

---

१. 'हि' क. पाठः.

दुकूलमुक्तावलिमाल्यरम्या
भृशं बभूवात्मपतेः प्रियाय ॥ २२ ॥

प्रत्यङ्गणं कल्पितपञ्चरत्न-
रङ्गालयश्चक्रुरनेकभङ्गाः ।
जिनेन्द्रजन्मावसरप्रणश्य-
त्पयोधरस्नस्तधनुर्विशङ्काम् ॥ २३ ॥

उत्क्षिप्तचित्रध्वजपङ्क्तयोऽपि
समीरमार्गे जिनजन्महृष्टाः ।
चञ्चत्पताकाग्रमिवाभ्यनृत्यन्[1]
परस्परं गाढमिवालिलिङ्गुः ॥ २४ ॥

मृदङ्गमन्द्रध्वनिमांसलेन
गीतेन नृत्यद्गणिकानिकायः ।
उद्वेलमुज्जृम्भितरागवार्द्धे-
स्तरङ्गमालाकृतिमाललम्बे ॥ २५ ॥

भव्याश्चिरं दुस्सहगन्धबन्ध-
मुक्त्यर्थिनोऽस्मिन्नुदिते विमुक्तिम् ।
यास्यन्ति यत्तेन[2] ययुस्तदैव
क्षितीन्द्रबन्द्यो यदिदं हि चित्रम् ॥ २६ ॥

श्रीखण्डषण्डेन जिनस्य गात्रे
सौरभ्यमिभ्यं प्रहितोऽवगन्तुम् ।
प्रभूतभीतेरिव कम्पमान-
श्च(का? चा)र चारुर्मलयाद्रिवातः ॥ २७ ॥

---

१. 'भि', २. 'त्त्तं न य' ख. पाठः.

प्रकाशते भानुसहस्रतुल्यं
तथाप्यहो नेत्रसुखैकहेतुः ।
कुमारकोऽसाविति लज्जितः किं
बभूव मन्दोष्णरुचिर्विवस्वान् ॥ २८ ॥

शुचित्ववृद्धेरसपत्नहेतो-
र्जिनस्य भक्त्या शुचयः कुरुध्वम् ।
प्रदक्षिणं यूयमितीव वक्तुं
प्रदक्षिणत्वेन शुचिर्दिदीपे ॥ २९ ॥

रजांसि धर्मामृतवर्षणेन
जिनाम्बुवाहः शमयिष्यतीति ।
न्यवेदयन्नम्बुधरा नितान्तं
रजोहरैर्गन्धजलाभिवर्षैः ॥ ३० ॥

जिनस्य कालारिरिति प्रसिद्धिं
विबुध्य भीता इव सेवनाय ।
वनाय सर्वे सहसावतेरु-
र्वसन्तमुख्याः सममेव कालाः ॥ ३१ ॥

अहो विभुङ्क्ते सवितारमेषा
तमीश्वरं द्वेष्टि च पश्यतेति ।
द्विरेफवृत्तिं[2] जिनजन्मदम्भा-
दम्भोजिनीमुत्पलिनी जहास ॥ ३२ ॥

अप्यद्ययावन्मधुपाननिष्ठाः
सम्प्रत्यपाप[1] इति गानभङ्ग्या ।

---

१. 'श्य' ख. पाठः. २. 'तृप्तिं जि' क. पाठः.

भृङ्गा वदन्तो विविशुः प्रतीत्यै
पञ्चाग्निकुण्डेषु परीत्य विघ्नः ॥ ३३ ॥

मुक्ता रजोभिर्बहुकण्टकैश्च
जिनप्रभावेन समुज्ज्वलात्मा ।
वसुन्धरापि प्रमदेन जाता
सस्यच्छलाङ्कुरितरोमराजिः ॥ ३४ ॥

स्वभावशुद्धा अपि सर्वजीवा-
श्चिरं रजोभिः परिभूयमानाः ।
न केवलं निर्गलितेषु तेषु
दधुः प्रसादं ककुभोऽपि सद्यः ॥ ३५ ॥

गृहेषु शङ्खा भवनामराणां
वनामराणां पटहाः पदेषु ।
ज्योतिस्सुराणां सदनेषु सिंहाः
कल्पेषु घण्टाः स्वयमेव नेदुः ॥ ३६ ॥

पुष्पाः पतन्तो नभसः सुधांशो-
रेणस्य सिंहध्वनिजातभीतेः ।
पदप्रहारैः पततामुडूनां
शङ्कां तदा विद्रवतो वितेनुः ॥ ३७ ॥

अभ्रात् पतन्तो मणयस्तदानी-
मुच्चण्डघण्टाध्वनिताडनेन ।
भिन्नेन्द्रकोशालयतो जनानां
मतिं वितेनुर्गलतां मणीनाम् ॥ ३८ ॥

---

१. 'म्भे' क. पाठः.

जाते जिने मा जनि भूजनानां
विपत्कणोऽपीति विभुत्वशक्त्या ।
बन्दीकृतानीव भुवि ग्रहाणां
बलानि रेजुर्मणयो विकीर्णाः ॥ ३९ ॥

देवोत्तमाङ्गान्यखिलोत्तमाना-
मानम्यपादस्य विभोः प्रणामैः ।
सार्थं स्वनामेव विधातुकामा-
न्यानेमुरत्यद्भुतमात्मनैव ॥ ४० ॥

जिनामृतांशोरुदितात् त्रिलोक्या-
मुत्कूलितस्य प्रमदाम्बुराशेः ।
प्रत्युच्चलद्वीचिवशेन सत्यं
भद्रासनानि द्युसदां विचेलुः ॥ ४१ ॥

विज्ञाय तेनाधिपजन्म पीठा-
दुत्थाय सप्तेत्य पदानि नत्वा ।
प्रादापयन्मेघहयोऽतिमेघां
प्रस्थानभेरीमभिषेक्तुकामः ॥ ४२ ॥

शङ्खादयोऽर्हज्जननं प्रणादै-
रेकैकलोकं स्वमबूबुधंस्ते ।
तत् सर्वलोकानभिषेकयात्रां
सा बोधयामीति मदादिवाप ॥ ४३ ॥

ज्योतिष्कवन्योरगकल्पनाथा
भेरीप्रणादादवगम्य यात्राम् ।

---

१. 'ज्ज्व' क. पाठः.

विभूषिताङ्गाः सपरिच्छदाः खे
विलोकयन्तः शतमन्युमस्थुः ॥ ४४ ॥

सामानिकैर्दिक्पातिभिः पदाति-
गन्धर्वहस्त्यश्वरथाद्यनीकैः ।
शरीररक्षैश्च समन्वितोऽयं
शच्या सहास्थाय गजं प्रतस्थे ॥ ४५ ॥

सार्थैः सुरेन्द्रैस्तरिभिर्विमानैः
सांयात्रिकोऽयं जलधिं विहायः ।
सन्तीर्य चिन्तामणिमीशितारं
सञ्चेतुमेयाय खनिं कुशाग्रम् ॥ ४६ ॥

इन्द्रोऽथ रुद्रविभवं गणिकानिकाय-
सङ्गीतकेलिरुचिरं रचिताष्टशोभम् ।
भक्त्या परीत्य पुरवन्नृपवासमीश-
मानेतुमन्तरचिरेण ससर्ज कान्ताम् ॥ ४७ ॥

इत्यर्हद्दासकृतौ काव्यरत्ने भगवज्जन्मोत्सववर्णनो नाम चतुर्थः सर्गः ॥

---

अथ पञ्चमः सर्गः ।

अदृश्यरूपाथ गृहे प्रविश्य
ददर्श बालामृतभानुमारात् ।
शची जनन्याः स्थितमम्बरान्ते
सुधारसस्यान्दिनमीक्षणानाम् ॥ १ ॥

वहन्त्यसौ भक्तिरसप्रवाहे
दिदृक्षमाणेव दृढावलम्बम् ।

समर्प्य मायाशिशुमम्बिकायाः
पुरो जहारोन्नतवंशमेनम् ॥ २ ॥

पाण्योर्जिनं न्यस्य निरित्य हर्म्याद्
व्रजन्त्यसौ वल्लभमाभिमुख्यात् ।
द्विरेफमध्याम्बुरुहेव रेजे
सरोजिनी भानुमभिस्फुरन्ती ॥ ३ ॥

जिनास्यचन्द्रेक्षणमात्रतोऽभू -
श्चतुर्निकायामररागसिन्धुः ।
विशृङ्खलो यत्र मुखस्मितानि
वितेनिरे फेनविभङ्गलीलाम् ॥ ४ ॥

दिवौकसां बालसुधामरीचि-
र्जयस्वनापूरितदिक्तटानाम् ।
हृदक्षिहस्तान् कुमुदेन्दुकान्त-
कुशेशयार्थान् कुरुते स्म सद्यः ॥ ५ ॥

जिनाङ्गलावण्यरसप्रपूर्णे
निश्शेषमस्मिञ् जगदन्तराले ।
विभासुरं तन्नगरं सुराणा-
मजीजनत् पाशिपुराभिशङ्काम् ॥ ६ ॥

जिगाय शच्या शतमन्युहस्त-
द्वये कृतस्तन्नयनाञ्चिताङ्गः ।
जिनार्भको भृङ्गकुलाभिरामं
दामोत्पलानां मणिभाजनस्थम् ॥ ७ ॥

---

१. 'धा' क. पाठः.

विभूषिताङ्गाः सपरिच्छदाः खे
विलोकयन्तः शतमन्युमस्थुः ॥ ४४ ॥
सामानिकैर्दिक्पतिभिः पदाति-
गन्धर्वहस्त्यश्वरथाद्यनीकैः ।
शरीररक्षैश्च समन्वितोऽयं
शच्या सहास्थाय गजं प्रतस्थे ॥ ४५ ॥
सार्थैः सुरेन्द्रैस्तरिभिर्विमानैः
सांयात्रिकोऽयं जलधिं विहायः ।
सन्तीर्य चिन्तामणिमीशितारं
सञ्चेतुमेयाय खनिं कुशाग्रम् ॥ ४६ ॥
इन्द्रोऽथ रुद्रविभवं गणिकानिकाय-
सङ्गीतकेलिरुचिरं रचिताष्टशोभम् ।
भक्त्या परीत्य पुरवन्नृपवासमीश-
मानेतुमन्तरचिरेण ससर्ज कान्ताम् ॥ ४७ ॥

इत्यर्हद्दासकृतौ काव्यरत्ने भगवज्जन्मोत्सववर्णनो नाम चतुर्थः सर्गः ॥

---

## अथ पञ्चमः सर्गः ।

अदृश्यरूपाथ गृहे प्रविश्य
ददर्श बालामृतभानुमारात् ।
शची जनन्याः स्थितमम्बरान्ते
सुधारसस्यन्दिनमीक्षणानाम् ॥ १ ॥
वहन्त्यसौ भक्तिरसप्रवाहे
दिदृक्षमाणेव दृढावलम्बम् ।

समर्प्य मायाशिशुमम्बिकायाः
पुरो जहारोन्नतवंशमेनम् ॥ २ ॥
पाण्योर्जिनं न्यस्य निरित्य हर्म्याद्
व्रजन्त्यसौ वल्लभमाभिमुख्यात् ।
द्विरेफमध्याम्बुरुहेव रेजे
सरोजिनी भानुमभिस्फुरन्ती ॥ ३ ॥
जिनास्यचन्द्रेक्षणमात्रतोऽभू -
श्चतुर्निकायामररागसिन्धुः ।
विशृङ्खलो यत्र मुखस्मितानि
वितेनिरे फेनविभङ्गलीलाम् ॥ ४ ॥
दिवौकसां बालसुधामरीचि-
र्जयस्वनापूरितदिक्कटानाम् ।
हृदक्षिहस्तान् कुमुदेन्दुकान्त-
कुशेशयार्थान् कुरुते स्म सद्यः ॥ ५ ॥
जिनाङ्गलावण्यरसप्रपूर्णे
निश्शेषमस्मिञ् जगदन्तराले ।
विभासुरं तन्नगरं सुराणा-
मजीजनत् पाशिपुराभिशङ्काम् ॥ ६ ॥
जिगाय शच्या शतमन्युहस्त-
द्वये कृतस्तन्नयनाचिताङ्गः ।
जिनार्भको भृङ्गकुलाभिरामं
दामोत्पलानां मणिभाजनस्थम् ॥ ७ ॥

---

१. 'धा' क. पाठः.

जिनाङ्गदीप्त्या पिहितस्वकान्ति-
विकस्वरस्फारसहस्रनेत्रः ।
सुराधिनाथः शुशुभेऽञ्जनाद्रि-
र्यथैव फुल्लस्थलपुण्डरीकः ॥ ८ ॥

करारविन्दद्वयभृङ्गराशिं
जिनं पदाब्जद्वितये प्रणम्य ।
चकार देवाधिपतिर्द्वितीय-
मनर्घ्यचूडामणिमुत्तमाङ्गे ॥ ९ ॥

अथैष संसारमहाम्बुराशिं
समुत्तितीर्षुर्जिनपोतमेनम् ।
दधत् कराभ्यां दृढमुत्सवेन
स्वसिन्धुरस्कन्धतटं निनाय ॥ १० ॥

द्वात्रिंशदास्यानि मुखेऽष्ट दन्ता
दन्तेऽब्धिरब्धौ बिसिनी बिसिन्याम् ।
द्वात्रिंशदब्जानि दलानि चाब्जे
द्वात्रिंशदिन्द्रद्विरदस्य रेजुः ॥ ११ ॥

अस्पृष्टनीरेजदलं नटन्त्यो
नट्यः सुराणामभितो नृसिंहम् ।
रंहो वितेनुर्निजवल्लभाशा-
प्रकाशमानाब्जनिवेशनानाम् ॥ १२ ॥

ईशाननाथः स्वयमातपत्रं
दधौ तदूर्ध्वोभयकल्पनाथौ ।
प्रकीर्णके प्राक्षिपतां परेऽपि
यथास्वमासन् करणीयभाजः ॥ १३ ॥

संसारगर्तापतिताखिलैक-
हस्तावलम्बं जिनराजमिन्द्रः ।
हृदा च दोर्भ्यामवलम्बमानः
पथा सुराणामथ संप्रतस्थे ॥ १४ ॥

आकारमात्रेण तुषारशैल !
का कूटराशेस्तव तुल्यतेति ।
आकर्णयिष्यन्निव विप्रलापा-
नाकाशमार्गेऽक्रमताभ्रनागः ॥ १५ ॥

आरुह्य नानाविधवाहनानि
जिनाग्रवामेतरपृष्ठदिक्षु ।
क्रमेण वन्योरगकल्पवासि-
ज्योतिष्कनाथा व्यचलन् ससैन्याः ॥ १६ ॥

नभोन्तरे नाथतनुप्रभाभिः
प्रपूरिते प्रोज्ज्वलरत्नकूटाः ।
बभुर्विमानाः कुलिशास्त्रभीतेः
समुद्रमग्ना इव सानुमन्तः ॥ १७ ॥

जिनाङ्गदीप्त्या दधुरभ्रवीथ्यां
तरङ्गितायां सितचामराणि ।
सुरावधूतानि कलिन्दकन्या-
तरङ्गदोलारतहंसलीलाम् ॥ १८ ॥

चला न्यलीयन्त जिनाङ्गरोचि-
र्वीचीप्रपञ्चेऽगरुधूमलेखाः ।
हरेर्विभीताः फणिराजपत्न्य-
स्तरङ्गकुञ्जेष्विव यामुनेषु ॥ १९ ॥

नभस्थलेनागरुधूमलेखाः
स्फुरत्स्फुलिङ्गाः शशिशङ्कयामी ।
सितातपत्रग्रसनाय धाव-
द्विधुन्तुदा वान्तविषस्फुलिङ्गाः ॥ २० ॥

अङ्गारविक्षिप्तदशाङ्गधूपः
सङ्क्रान्तसन्ताप इव क्षणेन ।
आश्लिष्यदुत्थाय पटीरहार-
कर्पूरकल्हारपयोरुहाणि ॥ २१ ॥

गद्येन पद्येन च दण्डकेन
शशंस गीतेन च गाथया च ।
मरुद्गणोऽयं न परं परोऽपि
गुहामुखोद्यत्प्रतिशब्ददम्भात् ॥ २२ ॥

वियत्तलं वीतघनाघनौघ-
मपि प्रपूर्णं जिनदेहभासा ।
विभिन्ननीलाञ्जनसन्निभेन
पुनर्घनापूर्णमिवाबभासे ॥ २३ ॥

जिनाम्बुदोऽसाविभदानवृष्टि-
र्नटीतटिद् वाद्यनिनादगर्जः ।
विमानमालारुचिकार्मुको दि-
व्याकालिकीं प्रावृषमाततान ॥ २४ ॥

अभ्राण्यदभ्राणि सुरेभदन्त-
प्रोतानि रेजुः परितो जिनेन्द्रम् ।
उत्क्षिप्यमाणानि मुदामुनेव
चन्द्राश्मदण्डातपवारणानि ॥ २५ ॥

सेनापदामर्दितपाण्डुमेघान्
मुक्तागुरूनभ्रतले बिडालाः ।
हठेन दध्यन्नधिया व्रजन्तः
स्कन्धाधिरूढाननयन्त मन्युम् ॥ २६ ॥

प्रयाणवेगानिलनीयमानाः
पयोधराः श्यामतनूनिभेन्द्रान् ।
सगर्जितानूर्जितदानवर्षान्
स्वबन्धुबुद्ध्या ध्रुवमन्वरुन्धन् ॥ २७ ॥

सदाभियुक्तापि तदामरौघैः
सहोत्पला भानुसुता प्रतीये ।
जिनाङ्गरोचिर्निचयेन दिग्धा
विबुद्धहेमाम्बुरुहा द्युसिन्धुः ॥ २८ ॥

विशालमाकाशतलं चकाशे
विभुप्रभाश्यामलतारकौघम् ।
विपाकनीलैर्विपुलैः फलौघै-
र्विलम्बमानामभिभूय जम्बूम् ॥ २९ ॥

स्वशून्यवादे परमागमेन
सद्यो निरस्ते विशदान्तरस्य ।
व्योम्नो विरेजुः पुलकोपमानि
जिनप्रभाश्यामलतारकाणि ॥ ३० ॥

मुग्धाप्सरा कापि चकार सर्वा-
नुत्फुल्लवक्त्रान् किल धूपचूर्णम् ।

रथाग्रवासिन्यरुणे क्षिपन्ती
हसन्तिकाङ्गारचयस्य बुद्ध्या ॥ ३१ ॥

मन्दाकिनीसालिसितारविन्द-
धियान्यया मूर्ध्नि कृतो मृगाङ्कः ।
अमन्यतापूर्णसुधं तमन्या
सनीलनीरेरुहदुग्धकुम्भम् ॥ ३२ ॥

अगच्छिदर्हद्द्युतिभानुजायां
सुरद्विपद्युतसुरसिन्धुसख्याम् ।
मज्जत् प्रतीहारसुरासुराणा-
मनीकमाद्रिं कथमप्यनैष्ट ॥ ३३ ॥

गिरीशमुद्यद्द्विपदन्तवृत्तिं
रवीन्दुताराभरसेव्यपादम् ।
दिगम्बरैरावृतमेनमारा-
दपश्यदग्रे प्रभुतुल्यमिन्द्रः ॥ ३४ ॥

सजातरूपोऽपि गिरिः प्रवृत्त-
दिगम्बराक्रान्तिरुदग्रकूटः ।
अघान्तकं पापभियाभ्ययासीत्
किमित्यमर्त्यैर्भणितः क्षणात्सः ॥ ३५ ॥

द्युमण्डलं मध्यगतस्य मेरो-
र्मणिप्रभापञ्जरभासमानम् ।
विभोरमुष्योपरि हेमदण्डां
बभार नीलातपवारणाभाम् ॥ ३६ ॥

---

१. 'धू' क. पाठः.

अगाह्यतः पाण्डुवनं समन्ता-
दुपर्यटन्त्या सुरसेनयाद्रेः ।
सजीवचित्राङ्कितमन्दवायु-
चलोत्तरीयाश्रियमावहन्त्या ॥ ३७ ॥

अनीकिनीमत्र वने समस्तां
सुरद्रुमच्छायसुखे यथार्हम् ।
निवेशयन् पाण्डुशिलामवाप
पूर्वोत्तरस्यां दिशि तस्य जिष्णुः ॥ ३८ ॥

शतार्धमष्टौ शतमुज्ज्वलाया
विशालतामुन्नतिमायतिं च ।
क्रमेण यस्याः खलु योजनानि
वदन्ति सर्वज्ञजिनेन्द्रपादाः ॥ ३९ ॥

आद्यद्विकल्पेशपरार्ध्यपीठ-
मध्यस्थजैनासनरम्यमध्या ।
सतोरणा रत्नमयाञ्चला या
समङ्गला शुक्तिसमाकृतिश्च ॥ ४० ॥

या चावभासेऽमरकल्पितेन
महाभिषेकोत्सवमण्डपेन ।
ज्वलन्मणिस्तम्भसहस्रमुक्ता-
वितानचित्रध्वजभूषितेन ॥ ४१ ॥

अभ्रेऽवलम्बरहिते सुचिरं सुमेरु-
क्ष्माभृत्प्रदक्षिणकृतिश्रमभारशान्त्यै ।

प्राप्तोऽष्टमीन्दुरिव पाण्डुवनं शिलैषा
प्रादात् सुरेन्द्रनयनोत्पलषण्डहर्षम् ॥ ४२ ॥

इत्यर्हद्दासकृतौ काव्यरत्ने भगवन्मन्दरानयनवर्णनो नाम
पञ्चमः सर्गः ॥

---

## अथ षष्ठः सर्गः ।

अथामरेन्द्रेण गजेन्द्रतो जिनः
संनीयमानः प्रति पाण्डुकं महत् ।
निराकृतोग्रो मधुनेव मन्मथो
नितम्बमुच्चैः शुशुभे हराचलात् ॥ १ ॥

नगेन्द्रफालस्थलबद्धपट्टिका-
शिलोपरि स्थापित एष जिष्णुना ।
जिनार्भकः प्रोतपुरन्दरोपल-
स्फुरन्मनीषामपुषद् दिवौकसाम् ॥ २ ॥

तरङ्गितज्योतिषि तच्छिलातले
सरोजरागाढ्यपवैरिविष्टरे ।
तरङ्गिताम्बौ त्रिदिवौकसां सर-
स्यलिर्यथा कोकनदेऽशुभद् विभुः ॥ ३ ॥

जिनेश्वरः पाण्डुशिलाप्रभान्तरे
रराज माणिक्यमयासने स्थितः ।
हरिर्यथा विद्रुमरागरञ्जिते
फणीन्द्रभोगे कलशार्णवान्तरे ॥ ४ ॥

जिनेन्द्रपाण्ड्वोर्मणिपीठरश्मिभिः
प्रवेणितः कान्तिरयो व्यराजत ।

यथा निमज्जद्वनिताङ्गकुङ्कुम-
द्रवैर्जलौघो यमुनात्रिमार्गयोः ॥ ५ ॥

बभौ नगेन्द्रः प्रभुपीठपाण्डुक-
प्रभावितानैः परितस्तिरोहितः ।
यथैव तापात्ययसान्ध्यशारदै-
र्घनाघनौघैर्युगपत् समावृतः ॥ ६ ॥

अथेन्द्रवाचा मणिदण्डभृद् विभुं
दिदृक्षयोपव्रजतो मुहुर्मुहुः ।
धनी दिगीशान् सपरिच्छदान् हठा-
न्निजे निजेऽस्थापयदाशु धामनि ॥ ७ ॥

जिनाभिषेकाय सुराङ्गनाजनं
सुरप्रतानं सुरनायकानपि ।
अशेषकृत्यं जिनभक्तिभावितान्
यथार्हमग्राहयदेष कृत्यवित् ॥ ८ ॥

अनन्तरं दक्षिणवामभागयो-
र्जिनस्य पूर्वाभिमुखस्य सुस्थिते ।
शचीपतीशानपती ससम्भ्रमौ
निजासने सम्मुखमध्यरोहताम् ॥ ९ ॥

अनेकतीर्थोपहृतैरथाम्बुभि-
र्घटोद्धृतैः स्नापयितुं जिनार्भकम् ।
यदारभेते स्म मुदा सुरानक-
स्तदाप्सरोगीतरवाप्तदिक्तटम् ॥ १० ॥

तदा ऋभूणामुभयी घटा घटैः
पयांसि नेतुं घटिता प्रयत्नतः ।
सुमेरुचूलादि सुधार्णवावधि
प्रबद्धनीलो(त्प ? प)लतीर्थपद्धतिः ॥ ११ ॥

बभुर्व्रजन्तो मणिकुम्भधारिणः
सुधाशिनः पाण्डुवनात् पयोवनम् ।
जिनेन्द्रभक्त्या जलनीतये स्वयं
प्रवृत्तपत्राङ्गसुरद्रुमा इव ॥ १२ ॥

भुवा च भीत्या भिदुरात्मकं सुराः
स्वभावतो ह्यक्षमुखैर्विवर्जितम् ।
विशालमाद्यन्तविदूरमद्भुतं
गभीरमापुस्त्वरया पयोनिधिम् ॥ १३ ॥

निपीड्य लक्ष्मीमपहृत्य चक्रिरे
ठकाः स्वकं जीवनमात्रशेषकम् ।
अपीदमायान्त्यपहर्तुमित्यगा-
दपांनिधिर्वेपथुमूर्मिभिर्न तु ॥ १४ ॥

मरुत्सु कुम्भान् युगपत् क्षिपत्स्वलं
जलाय संक्षोभमिषेण सागरः ।
जिनोत्सवार्होऽहमभूवमित्यभू-
न्मुदा समुन्मेषित एष केवलम् ॥ १५ ॥

विनिन्युरेकं मुखयोजनं घटै-
र्दधद्भिरष्टोदश योजनानि च ।

---

१. 'इतीद', २. 'ष्टोदरयो' ख. पाठः.

जलानि सर्वाण्यपि दुग्धवारिधेः
स्वकेन मार्गेण धराधरं सुराः ॥ १६ ॥

जिनोऽयमक्षीणमहानसर्द्धिभाग्
भविष्यतीत्यस्य विवक्षया स्फुटम् ।
वितीर्णमप्यम्बुधिना पयोऽखिलं
जिनाधिपायाक्षयतामयात् पुनः ॥ १७ ॥

अथामरेन्द्रौ सुरवृन्दढौकितान्
भुजैरनेकैर्विकृतैः पयोघटान् ।
विधृत्य जन्माभिषवं विधीच्छया
सुनिर्मलस्यापि जिनस्य चक्रतुः ॥ १८ ॥

सुवर्णगारुत्मतरूप्यकुम्भभि-
र्भुजासहस्रैरमराधिपावुभौ ।
व्यराजतां पाकशलाट्टपुष्पिभि-
र्लतासहस्रैरिव कल्पशाखिनौ ॥ १९ ॥

शिशुश्च शैलश्च धृतिं परीक्षितुं
ध्रुवं सुरेन्द्राह्वितयेन वारिधेः ।
निपीड्यमानौ युगपत् सुधाजलै-
रुभावभूतां समधैर्यसम्पदौ ॥ २० ॥

वहत्पयःपूरशतानि पाण्डुकाद्
बभुस्त्रिलोकैकगुरोर्जिनेशिनः ।
भरेण भिन्नादभितो विनिस्सरत्-
प्रभूतनिर्यासरसप्रवाहवत् ॥ २१ ॥

---

१. 'वपिष्य' ख. पाठः.

नगेन्द्रसम्पत्तिदिदृक्षया ध्रुवं
पयःप्रवाहाः परितोऽपि सम्भ्रमात् ।
हटत्तटीशृङ्गशिलागुहासरो-
वनेषु पर्याटुरनेकधा चिरम् ॥ २२ ॥

वहत्पयःपूरशतोऽभितो बभौ
सुमेरुराच्छिद्य पतत्रयोर्द्वयम् ।
पुनश्च केनापि चलिष्यतीत्ययं[1]
गिरिद्विषा राजतरज्जुबद्धवत् ॥ २३ ॥

विरेजुरुन्मग्ननिमग्नमूर्तयो
मुहुर्मुहुर्ज्योतिषलोकसंश्रिते ।
पयःप्रवाहे परितोऽपि तारका
यथैव[2] विस्पष्टविनष्टबुद्बुदाः ॥ २४ ॥

निशाकराहस्करभार्गवासितै-
रलक्ष्यत क्षीरतरङ्गिणी क्षणम् ।
सिताब्जरक्ताम्बुजकैरवोत्पलै-
र्विराजमानेव वियत्तरङ्गिणी ॥ २५ ॥

वहन्ति नानामणिमेदिनीप्रभा-
प्रबद्धदुग्धाम्बुधुनीशतान्यभुः ।
सुरेन्द्रभीताचलपालिनेऽब्धये
नगाधिपक्षिप्तविचित्रवस्त्रवत् ॥ २६ ॥

महीभृता तेन तदोपदीकृताः[3]
पयस्तटिन्यो भुवनैकपालकम् ।

---

१. 'रि' ख. पाठः. २. 'स्त', ३. 'धी' क. पाठः.

सुगोत्रलावण्यनिवासमर्णवं
समेत्य वर्याः स्वमयं व्यधुः क्षणात् ॥ २७ ॥

अथामरास्तीर्थजलैः सुरेश्वर-
द्वयेन सृष्टे जिनगन्धवारिणि ।
पटीरकर्पूरनिषद्वराविले-
ऽप्यहो ममज्जुर्हृतपापकर्दमे[1] ॥ २८ ॥

बभौतरां पाण्डुकसंज्ञिता शिला
समीपकीर्णैः स्नपनोदबिन्दुभिः ।
यथा शरच्चन्द्रकलोडुभिः श्रितै-
र्यथाच शुक्तिर्नवमौक्तिकैश्च्युतैः ॥ २९ ॥

प्रमार्ज्य निर्मज्जनशीकरांस्तनौ
दुकूलचेलाञ्चलपल्लवेन तम् ।
शची विमुग्धा जगदेकवृद्धम-
प्यलंचकाराखिलबालभूषणैः ॥ ३० ॥

निसर्गरन्ध्रश्रुति[2]संश्रयाभ्यां
रराज रक्तोत्पलकुण्डलाभ्याम् ।
जिनाधिपः पल्लवितद्विपार्श्वो
यथा रसालः शिशिरात्ययस्य ॥ ३१ ॥

हारस्य मुक्ता गलशङ्खमुक्ता
इव प्रभोरङ्गमरीचिवश्याः ।
उरःकपाटीयमुनाह्रदान्त-
र्वितेनिरे बुद्बुदपङ्क्तिलीलाम् ॥ ३२ ॥

---

१. 'मार्जुर्हृत', २. 'द्वयसं' ख. पाठः.

महीधरे तत्र निषेदिवांसं
तमालनीलाकृतिमुद्वहन्तम् ।
पयोदबुद्ध्या श्रितमिन्द्रचाप-
म(सि ? स)स्मरद् रत्नमयः कलापः ॥ ३३ ॥

बालामृतांशोर्ध्रुवमस्य पाद-
मेकान्ततः पङ्कजरुक्प्रशान्तेः ।
निबन्धनं बन्धुहिताय भानु-
र्भेजे ज्वलन्नूपुरवेषधारी ॥ ३४ ॥

कलङ्कमुक्त्यै सकुटुम्बमिन्दु-
र्नखच्छलेनाभजदस्य पादौ ।
सदाश्रयं सोऽपि न मोचयेति-
च्छलेन नीलोपलकिङ्किणीनाम् ॥ ३५ ॥

मुहुर्विलिप्तोऽपि जिनेन्द्रगात्रे[1]
शचीशरत्नोज्ज्वलभासि शच्या ।
सिताभ्रविभ्राजिपटीरपङ्कः
स्फुटोऽभवत् केवलसौरभेण ॥ ३६ ॥

अथाखिलेन्द्रैः सहितोऽमरेन्द्रः
समर्चनाभिः स्तवनैश्च नाट्यैः ।
समाप्य जन्माभिषवं समग्रं
कुशाग्रमेनं पुनरानिनाय ॥ ३७ ॥

ऋभुक्षिचक्षुर्द्युतिसिच्यमानो
जिनो बभौ देवगजे निषण्णः ।

---

१. 'मुनीन्द्र' क. पाठः.

तदापि पाण्डूपरि रत्नकुम्भ-
शतक्षरत्क्षीरनिषिच्यमानः ॥ ३८ ॥

पुरं नृपागारमपि प्रवेश्य[1]
पुरैव यक्षेन्द्रकृते सुरेन्द्रः ।
निवेशयामास स हेमपीठे
सभागृहे रत्नमये जिनेन्द्रम् ॥ ३९ ॥

ततः सुतास्येन्दुविलोकमात्र-
प्रवृद्धहर्षामृतसिन्धुमग्नौ ।
विलोक्य मातापितरौ स्मितास्यौ
निवेदयामास समस्तमिन्द्रः ॥ ४० ॥

माता स्वयं च परिरम्भमिषेण देवं
रोमाञ्चनीपकलिकानिकरैः कृतार्घ्या ।
प्रीत्याभ्यषिञ्चदमितप्रमदाश्रुनीरैः
स्वच्छैरतुच्छकुचकुम्भपयोद्वितीयैः ॥ ४१ ॥

मणिकाञ्चनदिव्यवस्त्रदानैः
पटुभेरीपटहोत्थितारवैश्च ।
युगपत् परिपूरिताखिलाशं
विदधे स्वःपतिरस्य जातकर्म ॥ ४२ ॥

करिष्यते मुनिमखिलं च सुव्रतं
भविष्यति स्वयमपि सुव्रतो मुनिः ।
विवेचनादिति विभुरभ्यधाय्यसौ
बिडौजसा किल मुनिसुव्रताक्षरैः ॥ ४३ ॥

---

१. 'वि' ख. पाठः.

देवैर्मज्जनमण्डनादिकरणे प्रौढाः प्रहृष्टाशया
  देवांश्चापि विनोदकर्मणि समानाकृत्यवस्थां गतान् ।
देवस्यास्य नियुज्य निर्जरपतिः प्रत्युद्ययौ स्वं जगत्
  प्रीत्यानुव्रजतो विसृज्य विबुधान् फालाग्रबद्धाञ्जलीन् ॥

इत्यर्हद्दासकृतौ काव्यरत्ने भगवज्जन्माभिषेकवर्णनो नाम
षष्ठः सर्गः ॥

---

**अथ सप्तमः सर्गः ।**

न निर्जरैर्वर्जितसेवनोऽयं
  न कान्तिसम्भावितशुक्लपक्षः ।
नच प्रदोषावसरं प्रपन्नः
  क विद्म बालेन्दुरियाय वृद्धिम् ॥ १ ॥

कराङ्गुलिं लिप्तसुधां स लीढ्वा
  बबन्ध मातुः स्तनयोर्न बुद्धिम् ।
सुरेन्द्रवन्द्यः सुरदेहतायां
  चिरानुभूतामृततृष्णयेव ॥ २ ॥

जिनार्भकस्येन्द्रियतृप्तिहेतुः
  करे बभूवामृतमित्यचित्रम् ।
चित्रं पुनः स्वार्थसुखैकहेतु-
  स्तच्चामृतं तस्य करे यदासीत् ॥ ३ ॥

उल्लोकितैरुत्पललोचनायाः
  ससम्भ्रमोत्क्षेपणकौतुकेषु ।

---

१. 'था' क. पाठः.

ररराज राजाङ्गभवोऽन्तरिक्षे
तटिल्लताश्लिष्ट इवाम्बुवाहः ॥ ४ ॥

नराधिपेनोरसि नीयमानो
बभार हारान्तरनायकत्वम् ।
भेजे चलत्कुण्डलतां भुजाग्रे
चूडामणित्वं शिरसि प्रपन्नः ॥ ५ ॥

करात् करं बन्धुजनस्य गच्छन्
रराज विभ्राजितहेमसूत्रः ।
स लेखवन्द्यः कृतहेमलेखो
वणिग्जनस्येव निकाषपट्टः ॥ ६ ॥

स जानुचारी मणिमेदिनीषु
स्वपाणिभिः स्वप्रतिबिम्बितानि ।
पुरः प्रधावत्सुरसूनुबुद्ध्या
प्रताडयन् नाटयति स्म बाल्यम् ॥ ७ ॥

शनैः समुत्थाय गृहाङ्कणेषु
सुराङ्गनादत्तकरः कुमारः ।
पदानि कुर्वन् किल पञ्चषाणि
पपात तद्वीक्षणदीनचक्षुः ॥ ८ ॥

स पांसुकेलौ सुरतर्णकानां
करावकीर्णैर्नवरत्नचूर्णैः ।
कृतोपवीतो व्यरुचत् कुमारः
सदिव्यधन्वेव नवाम्बुवाहः ॥ ९ ॥

अशेषविज्ञोऽनिमिषैः परीक्षा-
प्रदित्सयेवैष विधीयमानान् ।
नियुद्धमुख्याखिलबालकेलीन्
निरूपयामास नरेन्द्रसूनुः ॥ १० ॥

गतोनपादायुतवत्सरस्य
श्रितं ततो यौवनमस्य गात्रम् ।
मधुर्यथा नन्दनपारिजातं
शरद् यथा सान्ध्यसुधामयूखम् ॥ ११ ॥

अघर्मता निर्मलता च नित्यं
पयः सुधा वाङ्निकरो हितत्वम् ।
समाकृतिः संहननं च पूर्वं
सुगन्धिता निन्दितकैणनाभिः ॥ १२ ॥

परश्शतैरम्बुजकम्बुमत्स्य-
श्रीवत्समुख्यैर्वरलक्षणैश्च ।
सव्यञ्जनैश्चोनसहस्रकोण-[1]
मसूरिकाद्यैरुपलक्षितत्वम् ॥ १३ ॥

विलोचनासेचनकं स्वरूपं
वचांसि पीयूषरसालघट्टाः ।
जगत्त्रयीमप्यतथाविधातुं
पटीयसी काचन दिव्यशक्तिः ॥ १४ ॥

युतः स्वभावातिशयैरमीभिः
कृतोन्नतिर्विंशतिचापदण्डैः ।

---

१. 'के' क. पाठः.

विषाग्निशस्त्रादिविघातदूर-
स्त्रिदोषवैषम्यभवामयारिः ॥ १५ ॥

त्रिंशत्सहस्रीमितवत्सरायुः
स्फुटातसीसूनसमानवर्णः ।
तदायमुत्सृष्टधनुःशरस्य
स्मरस्य शङ्कां जनयाम्बभूव ॥ १६ ॥

पित्रापि निर्वर्तितदारकर्मा
ततः स यूनामधिपोऽपि वृद्धाम् ।
अग्राह्यत स्वामधिराजलक्ष्मीं
पुरैव राजा जगतां त्रयाणाम् ॥ १७ ॥

पुण्यैकलभ्योऽधिकसौख्यहेतु-
र्विचित्रवर्णो विशदान्तरङ्गः ।
[1]नृपासनस्थोऽनमयत् त्रिलोकीं
सदीपवर्तीन् निधिवत् पदाग्रे ॥ १८ ॥

आस्थानलक्ष्म्याः सगुणोरुकान्ति-
नृपावलीमौक्तिकहारमध्ये ।
स्थितो दधौ नायकरत्नशोभा-
मसौ महानीलरुचिर्नृपेन्द्रः ॥ १९ ॥

स चन्द्रपाषाणसभापयोधौ
सचामरोल्लोलतरङ्गमाले ।
शेषोपमस्फाटिकविष्टरस्थः
श्रिया सनाथो हरिवच्चकाशे ॥ २० ॥

---

१. 'न्तिः' क. पाठः.

चकम्पिरे हेममयाः किरीटा
मुहुः सभासौधसदां नृपाणाम् ।
जिनोक्तिपीयूषजुषां यथामी
मरुद्वशाज्जाह्नवपद्मकोशाः ॥ २१ ॥

जिनाम्बुदः पीठनगाधिरूढो
दिवौकसामेष धिनोतु वृन्दम् ।
प्रवर्षणैर्वागमृतस्य चित्रं
प्रमोदयामास च राजहंसान् ॥ २२ ॥

स्वस्थैरदुस्थोऽतनुसौख्यकृष्टै-
र्जुष्टामृतैरष्टगुणाभिरामैः ।
वृतोऽजरैः सिद्ध इवैष रेजे
विलोकयँल्लोकगतिं समस्ताम् ॥ २३ ॥

नरोरगस्वर्गिमनोरमाभि-
रुपास्यमानः स बभौ सभायाम् ।
जयार्थमुन्मुद्रितशास्त्रकोशो
जगत्त्रयाणामिव पुष्पकेतुः ॥ २४ ॥

उपायनीकृत्य गजाश्वरत्ना-
न्युपागतानामधिपं नृपाणाम् ।
न केवलं मार्गरुधो नगेन्द्रा
निपेतुरेषां दुरिताद्रयश्च ॥ २५ ॥

भक्तुं जिनेन्द्रं व्रजतां नृपाणां
चमूपदोद्धूतपरागपाल्या ।
विहाय चेतांसि पलायमान-
कपोतलेश्याकृतिरन्वकारि ॥ २६ ॥

चित्रं कृपालोर्जिनपस्य राज्यं
यत् प्राप्तबन्धानपि पापदस्यून् ।
बाधां दुरन्तां ददतो नितान्तं
विमोचयामास जगज्जनानाम् ॥ २७ ॥

जिनेऽवनिं रक्षति सागरान्तां
नयप्रतापद्वयदीर्घनेत्रे ।
कस्यापि नासीदपमृत्युरीति-
पीडा च नाल्पापि बभूव लोके ॥ २८ ॥

अधर्मता खड्गिनि तस्य राज्ये
पयोधरे सत्पथरोध आसीत् ।
वधूकटाक्षे श्रवणातिपातो
गजे कदाचिद् यदि दानलोपः ॥ २९ ॥

रतिक्रियायां विपरीतवृत्ती
रतावसाने किल पारवश्यम् ।
बभूव मल्लेषु गदाभिघातो
भयाकुलत्वं रविचन्द्रयोश्च ॥ ३० ॥

इति निरुपमभक्त्या सानुरक्त्यावनम्र-
त्रिभुवनपरिचूडाचित्ररत्नांशुवर्त्या ।
विलिखितपदपीठे राजपीठे स तस्थौ
दश दश शतसङ्ख्यान् वत्सरान् पञ्च चैव ॥ ३१ ।

इत्यर्हद्दासकृतौ काव्यरत्ने भगवत्कौमारयौवनदारकर्मसाम्राज्यवर्णनो नाम सप्तमः सर्गः ॥

---

## अथाष्टमः सर्गः ।

अत्रान्तरे श्रुतधरः श्रुतधर्मतत्त्वै-
 र्भव्योत्तमैर्दमवराख्यमुमुक्षुमुख्यः ।
आलोक्य यागकैरिपुङ्गवहर्स्तहर्ष-
 मापृष्ट इत्यचकथद् गजराजवृत्तम् ॥ १ ॥

राजाभवन्नरपतिः पुरि पूर्वताले
 दानं ददौ निकृतनिर्मलजैनधर्मः ।
स्वैरं कुपात्रनिवहाय ततोऽजनिष्ट
 सोऽयं गजः स्मृतवतैः कबलं निरुन्धे ॥ २ ॥

आकर्ण्य तद्वचनमाप्तभवस्मृतिः सन्
 सद्यः सदृग्विकलसंयममग्रहीत् सः ।
श्रुत्वा जगत्त्रयगुरुस्तदिदं सभास्थो
 निर्वेदमात्महृदये बिभराम्बभूव ॥ ३ ॥

हन्ताशुभाशरणदुःखचले भवेऽस्मिन्
 बीभत्सके वपुषि चेतननेययन्त्रे ।
प्रारम्भमृष्टपरिणामकटौ च भोगे
 लोलो वसाम्यलमलं स्वहिते यतिष्ये ॥ ४ ॥

तं निश्चितात्मकरणीयतया वसन्तं
 स्वान्तैर्नितान्तमवधार्य विमुक्तिनार्या ।
सम्पर्कलालसधियेव चरा विसृष्टाः
 सम्प्राप्य साधु जगदुर्जगदन्तदेवाः ॥ ५ ॥

---

१. 'गजपु', २. 'मस्तिह' ख. पाठः. ३. 'नः', ४. 'वि', ५. 'श्रि' क. पाठः. ६. 'न्तं निता' ख. पाठः.

अस्मात् तृतीयजनने जननान्धकूपा-
दभ्युद्धरेयमखिलं जगदित्युदीर्णा ।
चित्तस्थले तव कृपाच्छलकल्पवल्ली
या साद्य देव! फलिता जगदेकबन्धोः ॥ ६ ॥

सांयात्रिकस्त्वमसि बोधनकर्णधारो
यस्मात् तपःप्रवहणो गुणरत्नवाही ।
तस्माद् विनेयवरसार्थयुतो विमुक्ति-
द्वीपं गमिष्यसि भवाम्बुनिधेरवश्यम् ॥ ७ ॥

स्वं लोकमित्थमभिवन्द्य गतेषु तेषु
देवोऽपवर्गपुरसाधननिर्गमं तम् ।
बन्धून् निवेद्य जननीजनकौ परांश्च
प्राज्यं नियोज्य तनये विजये स्वराज्यम् ॥ ८ ॥

तीर्थाम्बुनाथदिविजप्रभुणाभिषिक्तो
दिव्याङ्गरागवसनाभरणैः प्रसिद्धः ।
अग्रेभवां ग्रहविवर्तमिव स्फुरन्ती-
मध्यारुरोह शिबिकामपराजिताख्याम् ॥ ९ ॥

भूमीभृतामभृत सप्त पदानि भूमौ
विद्याधृतां वियति सप्त पदानि वृन्दम् ।
आरभ्य पाण्डुवनमप्यृतुभिः प्रपन्नै-
रानिन्यिरे तदनु नीलवनं निलिम्पाः ॥ १० ॥

रेजे नभःस्थलविराजिविमानराजि-
रश्मिप्रतानवितताग्रविभागमेतत् ।

अत्तुं फलप्रकरमापततो[1] विहङ्गा-
नानायविस्तृतमिवोपरि निग्रहीतुम् ॥ ११ ॥

रेजे बहिर्घटितरत्नविमानमेत-
दन्तश्चरामरगलन्मकरन्दधारम् ।
सेन्द्रायुधं सचपलं च सवारि[2]धार-
मभ्रच्युतं मिथ इवाहतमभ्रजालम् ॥ १२ ॥

यानादथायमवतीर्य वनस्य मध्ये
श्रीदेन दिव्यपदमण्डपिकां प्रक्लृप्ताम् ।
आविश्य देवपतिदत्तकरावलम्बः
श्रीदब्धमौक्तिकचतुष्कमलञ्चकार ॥ १३ ॥

षष्ठोपवासनियमी सुरदिङ्मुखस्थः
पल्यङ्कवान् परिहृताम्बरमाल्यवेषः ।
त्यक्ताखिलोपधिरुपेतसहस्रभूभृ-
दुच्चार्यमाणवरसिद्धनमस्कृतिश्च ॥ १४ ॥

उत्खाय पञ्चभिरुदञ्चितमुष्टिबन्धैः
कैश्यं स पञ्चभवमूलचयं यथैव ।
वैशाखकृष्णदशमीदिवसेऽपराह्णे
दीक्षामुपादित युतश्रवणे सिताशौ ॥ १५ ॥

लोकत्रयैकगुरुरेष पुरैव पूर्ण-
चारित्रशीलगुणसंयमभारवाही ।
प्राप्ताखिलर्द्धिरुपजातचतुर्थबोधि-
रत्यन्तगौरवपदं पुनरास देवः ॥ १६ ॥

---

१. 'तः पतङ्गा' क. पाठः. २. 'नीरधा' ख. पाठः.

रेजेतरां दशशतैः श्रमणैरुपेतो
मेत्रैरिवामरपतिः किरणैरिवार्कः ।
पत्रैरिवाम्बुजमरैरिव चक्ररत्नं
शेषः फणैरिव निधानमिवैष यक्षैः ॥ १७ ॥

यस्माद् बभूव लवनं नियमेन तस्मि-
न्नेः पुष्पधन्व धुनतः पुरतो जिनेन ।
तस्मात् तदादि किल नीलवनाभिधानं
तस्याभवत् त्रिभुवनप्रथितं वनस्य ॥ १८ ॥

पश्चाज्जिनालकभरं मणिभाजनस्थं
रक्तोत्पलस्थमिव भृङ्गकदम्बमिन्द्रः ।
चिक्षेप दुग्धजलधौ जयघोषघूर्णद्-
बम्भाप्रणादबधिरीकृतसर्वलोकम् ॥ १९ ॥

यो यत्र यत्र जिनकुन्तलकर्बुरोऽभू-
च्छैवालमञ्जरितवत् स हि तत्र तत्र ।
क्षीराम्बुधिस्त्रिदशलोकमनांसि कर्षन्
वातावघूर्णितघनावृतवद् बभासे ॥ २० ॥

तं पारणां वृषभसेन इति प्रतीतो
राजाथ राजगृहनामनि राजधान्याम् ।
श्रद्धादिसप्तगुणवान् नवभेदभिन्नैः
पुण्यैरकारयदुपस्थितपूर्वपुण्यः ॥ २१ ॥

आश्चर्यपञ्चकमभूदथ रत्नवृष्टि-
राच्छादिताम्बरतला च लतान्तवृष्टिः ।

व्याप्तश्रुती विबुधदुन्दुभिनिस्वनाहो-
दानस्वनौ सुरभिशीतलमन्दवायुः ॥ २२ ॥

मुनिपरिवृढो निर्वर्त्यैवं तनुस्थितिमुत्तमां
मृदुमधुरया वाचाशास्यं विधाय यथोचितम् ।
मुनिसमुदयै रक्षिव्रातैश्च पौरनृणामनु-
व्रजितश्चरमः पुण्यारण्यं गजेन्द्रगतिर्ययौ ॥ २३ ॥

इत्यर्हद्दासकृतौ काव्यरत्ने भगवत्परिनिष्क्रमणवर्णनो
नामाष्टमः सर्गः ॥

---

अथ नवमः सर्गः ।

आलोक्य देवमथ पातितपञ्चबाणं
प्रायेण नश्यति मधौ मधुरा(स्त्रे ? स्त्र)बन्धौ ।
वेलामुपेत्य किल विस्फुरितप्रतापः
सद्योऽग्रहीदरिपदं विपिनं निदाघः ॥ १ ॥

वाताश्ववेगजरजःपिहिताभ्रभाग-
मागत्य सर्वमपहाय मेघोद्धुतस्य[२] ।
ग्रीष्मस्तुतोद[१] पिकभृङ्गबलान्यधाक्षीत्
केलीवनानि रुजति स्म च पुण्डरीकम् ॥ २ ॥

तद्भावि दुःखमिव वीक्षितुमक्षमत्वात्
क्षिप्रं मधौ व्रजति तीव्रनिदाघयोगात् ।
संतप्यमानमखिलं तरुवल्लिजातं
तापज्वरीव ददृशे मधुविप्रयोगात् ॥ ३ ॥

---

१. 'स्त', २. 'पथो द्रुत' ख. पाठः.

ग्रीष्मे विदीर्णवनभूमिविशालदर्यो
रेजुः कनत्कनकशेवधिदीप्रगर्भाः ।
मान्याभिरुग्रकरपादहतेः प्रवेष्टुं
क्लृप्ताग्निकुण्डशतवद् वनदेवताभिः ॥ ४ ॥

मिथ्यात्वकर्मकृतयाशुभयेव दृष्टया
जन्तुप्रजापरमतत्त्वधियाप्यतत्त्वम् ।
ग्रैष्म्या तृषा मृगगणा मृगतृष्णिकाम्भः
सेदुर्नदीरयधिया बत धावमानाः ॥ ५ ॥

तृष्णातुरः स्वयमपि द्युमणिर्बभूव
सन्तापवांश्च समयेऽत्र न चेत् कराग्रैः ।
पङ्काविलान्यपि जलान्यपिबत् किमर्थं
प्रालेयशैलतटमध्युषितश्च कस्मात् ॥ ६ ॥

शङ्कामयं जनितवान् जगतो वनान्तः
किं पाटलाः कुसुमिता दवपावकाः किम् ।
किं वल्लिकाः स्तिमितैभृङ्गगणाः किमेते
शान्तोल्मुका विशदभस्मचया इतीत्थम् ॥ ७ ॥

सन्तप्तरेणुनिकरं कृपयेव वाता
निन्युः सुशीतलजलां द्युनदीं निदाघे ।
एकान्ततप्तवसुधास्थितिभीतैभीता
द्रागद्रवन्निव तदा मृगतृष्णिकौघाः ॥ ८ ॥

हा हन्त तृड्भरविदीर्णगला मृगाली
पङ्काविलोष्णसलिलं वनपल्वलानाम् ।

---

१. 'म', २. 'र', ३. 'ततींभिर्द्रां' ख. पाठः.

अल्पं कथञ्चिदपिबत् कृपयावगम्य
केनाप्युपाहृतमिवोद्धकषायतोयम् ॥ ९ ॥

धात्री दरीमुखगतैर्विपिनस्थलीनां
व्यादीर्णवेणुगलितैर्मणिभिर्विरेजे ।
मा लोकमित्र! शिखिनो मम पीडयेति
दीनं प्रकाशितरदेव दिनाधिपाय ॥ १० ॥

सन्तापिताः स्वरिपुराहुमहारुषेव
चण्डांशुना सहशराहुकुलाः फणीन्द्राः ।
शङ्केऽगतान्यशरणा व्यलुठंस्तदीये
पादाग्र एव कृतवक्त्रपुटप्रमोक्षाः ॥ ११ ॥

इत्येष तीव्रतरभावमिपीड्यमान-
निश्शेषजीवनिवहोऽपि निदाघकालः ।
निम्येऽत्र जीवनिवहैः सुखमात्तयोगः
पुण्ये जगद्गुरुरवास्थित यत्र शैले ॥ १२ ॥

गम्भीरगर्जितभरादथ कम्पमान-
चक्राङ्गबालविरहिव्रजमब्दकालः ।
छिद्राविशत्फणि सन्नृत्यमयूरयूथ-
मुन्मीलदोष्ठपुटचातकमुद्बभूव ॥ १३ ॥

प्राजीजनन् प्रसृतसर्वसमुद्रदेशाः
शक्रेण सिन्धुजलमम्बमगाग्रहाय ।
क्षिप्तोरुजालधिषणां पुनरुत्पतन्तः
खं नीयमाननगशेमुषिकां नवाब्दाः ॥ १४ ॥

नो विद्म साभ्रमपराम्बुनिधेरटन्ती
विद्युत्वतां किमु ततिर्बडवानलार्ता ।
वार्दन्तिसन्ततिरुत द्युनदीक्षणार्थं
व्यारूढपाशिवनितामकरीततिर्वा ॥ १५ ॥

नीरन्ध्रमभ्रपटलं पिहिताखिलद्यु
भ्रेजेतरां विधृतदीर्घतराम्बुधारम् ।
देव्याः क्षितेरुपरिलम्बितदीर्घमुक्ता-
मालं विशालमिव धातृकृतं वितानम् ॥ १६ ॥

रेजुः प्रसृत्य जलधिं परितोऽप्यशेषं
मेघा मुहुर्मुहुरभिप्रसृताभ्रभागाः ।
आदानवर्षणमिषात् पयसां पयोधिं
व्योमापि मान्त इव संशयिनाशयेन ॥ १७ ॥

कान्तारभूमिषु विदीर्णदरीनिधान-
देदीप्यमानमणिराशिमुपोपविष्टाः ।
अङ्गारपुञ्जमनसा किल सेवमानाः
शाखामृगाः शुशुभिरे नववृष्टिशीर्णाः ॥ १८ ॥

नीलोपलोर्ध्वनिलयैर्मणितोरणाग्रै-
रन्तर्बहिः परिमुहुर्विचरद्वधूकैः ।
किर्मीरिता जलधराः सुरचापरम्या
विद्युद्युता विविदिरे[2] नगरेषु वर्षैः ॥ १९ ॥

उन्मार्गवर्त्यपि जगज्जनमान्यवृत्ति-
रुल्लासभासुरकुजोऽप्युरुबाष्पसीतः ।

---

१. 'ता', २. 'वि' ख. पाठः.

अम्भोमुचामशमयत् प्रचयो रजांसि
प्रत्याहृतामलदिगम्बरदर्शनोऽपि ॥ २० ॥

किं केतकी कुसुमिता किमयं तडित्वान्
सम्बाधतो जलमुचां पतितः पृथिव्याम् ।
किं वा धृतेन्दुशकलस्तमसां समूहः
किं शाकिनी शितरदा तरुणादनाय ॥ २१ ॥

गोत्रारिगोपकरका व्यरुचन् धरायां
मेघागमेन दयितेन कृताङ्कपाल्याः ।
व्योमश्रियः स्तनतटत्रुटितोरुहार-
स्रस्तावकीर्णनवविद्रुममौक्तिकाभाः ॥ २२ ॥

आलप्य खल्वतितरां चतुरैरमुष्मि-
न्नारूढधन्वनि सतामवमानहेतौ ।
काले हि राजविकले कलुषात्मनीति(ः)
कामं पिकोऽभवदुरीकृतमूकभावः ॥ २३ ॥

प्रत्युन्मिषन्नवकदम्बरजोभिरुच्चै-
श्चक्रे दिगम्बरहृदप्यनुरक्तमाशु ।
चित्तान्यरञ्जयत रागिजनस्य तस्ये-
त्याश्चर्यमत्र किमु पश्चिमगन्धवाहः ॥ २४ ॥

इत्यम्बुवाहसमयोऽपि विजृम्भमाणो
वज्रानलं जनपदेषु ससर्ज नेषत् ।
चक्रेऽतिवृष्टिमितरां नच दुर्दिनानि
तस्य द्रुमूलगतलोकमतेः प्रभावात् ॥ २५ ॥

---

१. 'न्याततो' क. पाठः.

सुश्लिष्टकान्तमथ सीत्कृतगर्भकण्ठं
निःस्वेददीर्घसुरतं स्वदमानवह्नि।
कर्पूरखण्डविकलक्रमुकोपभोगं
कश्चिद् बभूव विषयः समयो जनानाम्॥ २६॥

उच्चाटनाय शरदः सितसर्षपौघो
निर्दग्धुमब्जानिलयानिलयं तुषाग्निः।
आलम्भचूर्णमसहायजनस्य कामं
प्रालेयशीकरमिषेण कुतोऽप्यपप्तत्॥ २७॥

रेजुः प्रभातसमयेषु लतावनद्धाः
क्षोणीरुहस्तुहिनवारिकणैर्विकीर्णैः।
आलिङ्गितस्तबकचारुकुचा रतान्त-
प्रादुर्भवद्भिरिव घर्मलवैर्युवानः॥ २८॥

कालेऽत्र तीव्रहिमभाजि न वासरेन्द्रः
सान्द्रांशुकोऽपि सहते स्म हिमाद्रिवासम्।
दूरस्थमप्यथ ययौ मलयाचलेन्द्रं
गोशीर्षकोटरफणिश्वसितैः कवोष्णम्॥ २९॥

लौध्रेण सौरभसनाद्रितदिङ्मुखेन
रेणूत्करेण पिहितानि वनानि रेजुः।
लोकातिदुःसहसहस्यभयादिवात्त-
पत्राङ्गचारुतरभूरिनिवारकाणि॥ ३०॥

सन्तापिता रतिपतेस्त्रिजगज्जयार्थं
नाराचिकाः सुनिशिता इव निर्विचारम्।

---

१. 'स्सुनिशिताश्चि' ख. पाठः.

कातर्यमम्बुजदृशो दिदिशुर्जनानां
काश्मीररेणुकलिताङ्गलता हिमर्त्तौ ॥ ३१ ॥

कान्तावियोगदहनेन नितान्तदग्धाः
पान्थास्तुषारपतनेन विशीर्यदङ्गाः ।
ऊष्मायमाणवदनाः श्वसितैरशङ्कं
चूर्णोपलाः समभवन् सलिलोपसिक्ताः ॥ ३२ ॥

सत्यं तुषारपटलैः शमिनो न रुद्धाः
सिद्धैः[1] पुनः परिचयाय हिमर्त्तुलक्ष्म्या ।
छन्ना दुकूलवसनैर्नु पटीरपङ्कै-
र्लिप्ता नु मौक्तिकगुणैर्यदि भूषिता नु ॥ ३३ ॥

इत्थं सुदुःसहतुषारतुषावपातै-
र्निर्दग्धनीरजकुले समयेऽपि तस्मिन् ।
म्लानानि नैव कमलानि महानुभावो
यस्याः स्थितः स भगवान् सरितः प्रतीरे ॥ ३४ ॥

कायक्लेशाभिधाने तपसि जिनपतिर्निष्ठितो वर्षमेकं
बाह्यान्तर्विग्रहद्वादशविधतपसां मध्यमेऽप्यग्रय इत्थम् ।
दीक्षाकल्याणमादौ समभवदभवद् यत्र तत्रैव भूयो
नीलारण्ये शरण्ये भवचकितधियामात्तपुण्ये वरेण्ये ॥ ३५ ॥

इत्यर्हद्दासकृतौ काव्यरत्ने भगवत्तपोवर्णनो नाम
नवमः सर्गः ॥

---

१. 'द्धैः' क. पाठः.

अथ दशमः सर्गः ।

श्रीमन्तमेनमखिलार्चितमात्मधाम
प्राप्तं स्वयं सपदि तद्वनभूजषण्डम् ।
शाखाकरेषु धृतपुष्पफलप्रतान-
मासीदिवार्चयितुमुद्यतमादरेण ॥ १ ॥

तस्यैव कीलकलनाः किमु पल्लवानि
तस्य स्फुलिङ्गनिकरो ननु कुड्मलानि ।
तस्यैव धूमविततिर्न पुनर्द्विरेफा
दत्त्वा वने यमनलं मदनो निमग्नः ॥ २ ॥

अस्मिन्नमूनि न पलाशदलान्यघारे-
रुद्वेलशान्तरससागरविद्रुमा नु ।
वान्ता मृगैश्चिरविरोधलवा मिथो नु
वन्यैस्ततार्चनमणिप्रकरा नु रेजुः ॥ ३ ॥

अध्यास्य चम्पकतरोस्तलमात्तपृष्ठो
धर्म्याणि बिभ्रदवलम्बितशुभ्रलेश्यः ।
शुद्धात्मतत्त्वमिव जातविवर्तमीशो
ध्यानं दधे दुरितधूननचुञ्चु शुक्लम् ॥ ४ ॥

स्त्यानत्रयं जिनपतिः क्रमशो रजांसि
साष्टानि त्रयोदश पुरा हतसप्तमोहः ।
मोहैकविंशतिमपि क्षपयन् ददाह
क्षीणेऽथ षोडशचिदीक्षणरोधविघ्नान् ॥ ५ ॥

---

१. 'ष', २. 'ना' ख. पाठः.

घातीन्यपि प्रबलशक्त्यतिगर्वितानि
देवस्य योगकरवालदितान्यभूवन् ।
वर्त्मात्मनः किमिति चिन्तनयेव दग्ध-
रज्जूपमं सममघातिबलं बभूव ॥ ६ ॥

इत्यस्तपापरिपुराप सहैव लब्धि-
वैशाखकृष्णदशमीश्रवणेऽपराह्णे ।
[1]साक्षायिकीर्नवदशातिशयान् पदं[2] च
प्रासोदयं नभसि पञ्चसहस्रदण्डैः ॥ ७ ॥

अत्रान्तरे सकललोकपतेरमुष्य
शक्राज्ञयाचरितवान् धनदः सभां ताम् ।
तस्याः प्रमाणमुदितं मुनिभिः पुराणै-
रध्यर्धयोजनयुगं बहुरत्नमय्याः ॥ ८ ॥

रेजेतरां दिविजराजदृषत्प्रातिष्ठा
संसन्[3]मही विनयसङ्कुचिताखिलाङ्गा ।
व्योमस्थलीव भुवि यः समवाप्य सेव्यः
सोऽयं स्वयं गुणनिधिः समगच्छतेति ॥ ९ ॥

प्रासादचैत्यपरिखालतिकाद्रुमक्ष्मा
जाता ध्वजद्युकुजहर्म्यगणैक्षमाश्च ।
पीठानि चेति हरसङ्ख्यभुवस्तदन्त-
रेकान्तकेलिसदनं जिनबोधलक्ष्म्याः ॥ १० ॥

प्रासादचैत्यनिकरः परिखा व्रतत्यो
वृक्षा ध्वजः सुरकुजाः क्रमशोऽष्टभूषु ।

---

१. 'स' क. पाठः. २. 'दश्च प्रा', ३. 'प' ख. पाठः. ४. 'णा' क. पाठः.

आसन् गृहाणि च गणास्त्रिषु विष्टरेषु
श्रीधर्मचक्रविविधध्वजमङ्गलानि ॥ ११ ॥

सालैश्चतुर्भिरपि पञ्चभिरप्युदार-
वेदीभिरुन्नतिरवापि चतुर्गुणैव ।
लोकोन्नतादपि जिनाधिपतेरमुष्मा-
ज्जैनप्रदक्षिणकृतेः फलमीदृशं हि ॥ १२ ॥

आवेष्ट्य संसदवनीतलवारिवाहं
प्रारभ्यमाणसुकृतामृतपूरवर्षम् ।
सालेन सर्वमणिचूर्णमयेन तेने
तेनापि तानसुरकार्मुकसम्पुटश्रीः ॥ १३ ॥

लोकेषु कूटरहितेषु महामहिम्नो
देवस्य तस्य निकटेऽपि कृताधिवासाः ।
प्रासादचैत्यनिलयाः प्रथयांबभूवुः
कूटान् दिगम्बरपथप्रतिरोधिनो धिक् ॥ १४ ॥

मार्गेष्वपि त्रिषु चिरभ्रमणेन खिन्ना
भिन्ना पुरैव भवलालनया द्युसिन्धुः ।
शङ्के जिनेन्द्रचरणं शरणं प्रवेष्टुं
सम्प्राप सम्प्रति सभां जलखातकात्मा ॥ १५ ॥

वल्लीक्षितौ सुमनसो रतिवल्लभस्य
भल्लक्रियागतजगल्लयपातकानि ।
संलप्य भृङ्गरणितेन विशुद्धिहेतोः
किं लोकनाथमभजन् सुमनोनिषेव्यम् ॥ १६ ॥

कङ्केलिसप्तदलचम्पकचूतषण्डाः
कामारिसन्निधिवशादिव शान्तकामाः ।
पुष्पाणि वामचरणाहतिचाटुवाद-
च्छायाकटाक्षनिरपेक्षमधुर्वधूनाम् ॥ १७ ॥

अर्चां जिनस्य वनचैत्यमहीरुहाणा-
मच्छिन्नधारमकरन्दमुचां तलेषु ।
चक्रुर्निरत्ययतपात्यययोगनिष्ठा-
निष्कम्पगात्रजिनयोगिवराभिशङ्काम् ॥ १८ ॥

ज्ञानोदये जिनपतेः स्थिरभावमाप्ते
लोके स्वयं च तडितः स्थिरभावमाप्ताः ।
प्रायः प्रलम्बितघनास्तमुपासते स्म
प्रेङ्खत्पताककनकध्वजदण्डदम्भात् ॥ १९ ॥

भव्यावलेर्दशविधामरभूजकृत्यं[1]
वाञ्छां विनैव विदधात्ययमेक एव ।
यत्ते तदेनमभितोऽप्ययभजन् जिनेन्द्रं
रुद्धान्[2] गुणैर्विगुणिनः समुपाश्रयन्ते ॥ २० ॥

आकीर्णकेतुचमरीरुहतालवृन्त-
कालाचिकाब्द[3]कलशातपवारणादिः ।
हर्म्यावनी जिनजितद्रुतपुष्पकेतोः
सेनानिवेश इव चेलकुटीचितोऽभात्[4] ॥ २१ ॥

देवेन्द्रनेत्रकुमुदोत्सवचन्द्रिकाया
देदीप्यमानमणिवैकृतगन्धकुट्याः ।

---

१. 'त्यमिच्छां वि', २. 'त्वा' ख. पाठः. ३. 'ब्ध', ४. 'भू' क. पाठः.

उच्चैर्ऋतोरिव विदिक्षु भृशं विरेजुः
कोष्ठाः प्रकीर्णकवदुज्ज्वलरूपभाजः ॥ २२ ॥

तेषु प्रदक्षिणमनुक्रमतो मुनीन्द्राः
कल्पाङ्गनाश्च नृवधूसहितार्यिकाश्च[1] ।
ज्योतिष्कभौमभवनामरिकाश्च भोगि
भौमोडुकल्पसुरमर्त्यमृगाश्च तस्थुः ॥ २३ ॥

वीथीषु नाथचतुराननिर्यदुक्ति-
पीयूषनद्युभयचारुतटानुकाराः ।
अष्टायतस्फटिकभित्तय आवितेनु-
र्वृद्धेशभूतिविनिवेशितयष्टिशङ्काम् ॥ २४ ॥

यच्छ्रूयते सुरपथात् सुमनस्स्रवन्ती
स्रस्ता तरङ्गिततनूरिति पुस्तकेषु ।
तत्त्वेतदित्यनुमिमे भगवत्सभाया
यत् तीर्थपद्धतिचतुष्टयमर्कशिल्पम् ॥ २५ ॥

वाराशितीर्थकरवारणसंख्यरूपा
देवादिरुद्धनगकज्जलभूधरास्तम् ।
दैर्घ्यस्पृहो निखिलदिग्गतहेमरूप्य-
नीलाश्मगोपुरनिभादभजन्त दैवम् ॥ २६ ॥

सम्प्राप्य चारुगुणरत्ननिधिं जिनेन्द्रं
लोकैकमङ्गलममुं समपक्षरागात् ।
शक्तानि मोक्तुमथ नो निधिमङ्गलानि
द्वारेषु तस्थुरखिलेष्विह को वितर्कः ॥ २७ ॥

ज्योतिष्कयक्षफणिकल्पसदः क्रमेण
तेजस्विनः प्रतिदिशं मणिदण्डहस्ताः ।
द्वारत्रयद्वितययुग्मयुगेषु तेनु-
र्द्वाःपालकृत्यमपि जन्मशतैरलभ्यम् ॥ २८ ॥

तुङ्गाम्बरं प्रतिदिशं नवगोपुराणा-
मष्टान्तरेषु बहिरादिमगोपुराच्च ।
नानाविधाभिनवशिल्पमनोभिरामं
माणिक्यतोरणशतं पृथगाविरासीत् ॥ २९ ॥

आद्यन्तरे निहतदुर्मतिमानगुम्फाः
स्तम्भाश्चतुर्थ इह राजतनाट्यशालाः ।
षष्ठेऽपि नाट्यनिलयाः किल सप्तमेऽस्मिन्
स्तूपाश्च तोरणशतान्तरिता बभूवुः ॥ ३० ॥

दुःखौघसर्जनपटूंस्त्रिजगत्यजेयान्
साक्षान्निहत्य चतुरोऽपि च घातिशत्रून् ।
स्तम्भा जयादय इव प्रभुणा निखाताः
स्तम्भा बभुः प्रतिदिशं किल मानपूर्वाः ॥ ३१ ॥

संसारदुस्तरमहार्णवमग्नजन्तू-
त्तारैकनावि सदसीश्वरकर्णधारे ।
स्तम्भश्रियं विदधुरुज्ज्वलरत्नमान-
स्तम्भाः समीरचलकेतुपटाभिरामाः ॥ ३२ ॥

मानाधिकौ[1] कनकगोपुररूप्यसाल-
व्याजेन मानमवितुं बहुरूपभाजौ ।

मन्ये सुमेरुविजयार्धनगौ स्म मान-
स्तम्भानुपेत्य भजतश्चतुरोऽपि भीत्या ॥ ३३ ॥

भञ्जत्पुरन्ध्रिकुचकुङ्कुमलालितानि
पर्यन्तखातसलिलानि वितेनुरेषाम् ।
आलोकनेन सुचिरोपचिताभिमानै-
र्लोकैर्विवान्तदृढमानरसाभिशङ्काम् ॥ ३४ ॥

विश्रामसुन्दरमृदङ्गनिनादगर्जा
विद्युल्लतायितनिलिम्पनटीसनाथाः ।
नाट्यालया विजितशारदवारिवाहा-
श्चित्तक्षितौ नवरसान् ववृषुर्जनानाम् ॥ ३५ ॥

सौवर्णधूपघटनिर्गतधूमजालं
सौरभ्यशालि ददृशे जिनपूजनाय ।
आयज्जनस्य सुचिरं हृदयारविन्द-
गन्धाधिवासितमिव द्रवदन्धकारम् ॥ ३६ ॥

जैनी सभा जिनपदाम्बुजसेवयैव
सेत्स्यन्ति मङ्क्षु नव केवललब्धयो वः ।
इत्येवमुन्नतनवाङ्गुलिसंज्ञयो(च्चैः ? चे)
स्तूपच्छलादुपयतां जिनसेवनार्थम् ॥ ३७ ॥

रेजे विशालगणभूतलवेष्टितस्य
पीठत्रयस्य शिरसि द्विपवैरिपीठम् ।
धर्तुं जिनेश्वरमुपागतभद्रसाल-
रुद्धत्रिसानुकनकाचलचूलिकेव ॥ ३८ ॥

तत्र त्रिकालविषयाखिलवस्तुवृत्ति-
साक्षी[1] प्रबोधमहसा सकलं स जानन् ।
जिज्ञासयोपगतसङ्घचतुष्टयस्य
तज्ज्ञापनोत्सुकतयेव चतुर्मुखोऽस्थात् ॥ ३९ ॥

भामण्डलेन निकटोच्चलचामरेण
संवेष्टितो दिवि जिनाधिपतिश्चकाशे ।
हंसान्वितेन शरदम्बुदे[2]मण्डलेन
नीलाम्बुवाह इव कोऽपि कृतोपवीतिः[3] ॥ ४० ॥

अस्याशरीरपदलिप्सुतया शरीरं
बोधासिना हतवतो भुवनैकमल्लम् ।
वीरस्य पार्श्वमुपयन्ति तदा तदीय-
दिव्यायुधान्यनुचकार लतान्तवृष्टिः ॥ ४१ ॥

दिव्यध्वनिश्च सुरदुन्दुभिनिस्वनश्च
सन्त्यक्तशासनतदीयफलाभिलाषम् ।
उत्पद्य[4]मानमुभयं युगपज्जहार
श्रोत्रं मनश्च सुतरां परिषज्जनानाम् ॥ ४२ ॥

सर्वज्ञपादरतयो वयमप्यशोका
मुग्धाङ्घ्रिजातरतयः किल तेऽप्यशोकाः ।
इत्यालपन्नलिनिनादपदादशोकः
प्रत्युन्मिषत्कुसुमकैतवतो जहास ॥ ४३ ॥

छायां तिरस्कृतवतो जगदेकभर्तु-
श्छायां प्रदातुमितमेतदलं ललज्जे ।

---

१. 'क्षि' क. पाठः. २. 'ज', ३. 'धिः' ख. पाठः. ४. 'त्य' क. पाठः.

छत्रत्रयं न यदि शारदनीरदाभं
श्यामं जिनाङ्गरुचिसङ्गनिभात् कुतोऽभूत् ॥
स्त्रीबालवृद्धनिवहोऽपि सुखं सभां ता-
मन्तर्मुहूर्तसमयान्तरतः प्रयाति ।
निर्याति च प्रभुमहात्मतयाश्रितानां
निद्रामृतिप्रसवशोकरुजादयो न ॥ ४५ ॥

मिथ्यादृशः सदसि तत्र न सन्ति मिश्राः
सासादना[1]: पुनरसंज्ञिवदप्यभव्याः ।
भव्याः परं विरचिताञ्जलयः सुचित्ता-
स्तिष्ठन्ति देववदनाभिमुखं गणोर्व्याम् ॥ ४६ ॥

इत्यद्भुतां त्रिभुवनैकपतेः सभां ता-
मागत्य वीक्ष्य निखिलं हरिणा जिनेन्द्रम् ।
आकीर्णपुष्पमवनम्य पुनर्ममज्जे
हर्षाम्बुधौ भवसमुद्रतितीर्षुणापि ॥ ४७ ॥

साक्षायिकाचलदृशोज्ज्वलसंयमेन
सप्तर्द्धिसम्यगवबोधचतुष्कभाजा ।
श्रीमल्लिनाथगणिनाथ तदीरितेन
पृष्टः समस्तविदसौ निजगाद तत्त्वम् ॥ ४८ ॥

अथ समयविदिन्द्रादेशतो वाद्यदेवै-
र्विनिहतजिनसंख्योदारभेरीप्रणादः ।
विघटितगिरिसन्धिर्विश्वविश्वैकभर्तु-
स्त्रिभुवनमपि यात्रारम्भमावेदयत् तम् ॥ ४९ ॥

---

१. 'ध' क. पाठः.

समवसरणमग्रे भव्यपुण्यैश्चबाल

स्फुटकनकसरोजश्रेणिना लोकवन्द्यः ।

सुरपतिरपि सर्वाञ् जैनसेवानुरक्तान्

कलितकनकदण्डोऽयोजयत् स्वस्वकृत्ये ॥ ५० ॥

सितचमररुहाली पार्श्वयोश्चिक्षिपाते

सुधिय उपरि शुभ्राण्यातपत्राणि देवैः ।

उदधृषत तथाष्टौ मङ्गलान्यप्सरोभि-

र्दिशि दिशि धृतमग्रे धर्मचक्रं च यक्षैः ॥ ५१ ॥

सपदि पवनदेवाः शर्करालोष्टधूली-

कृमितृणमपनिन्युर्भूतलान्मेघदेवाः ।

सुरभिसलिलसेकं चक्रुरत्रेदमासी-

न्मुकुरतलवदच्छाकाशदिक्स्पर्धयेव ॥ ५२ ॥

धरणिरमरवृष्टैरुद्गमैः सोपहारा

सुरमणिमकुटार्चिःशक्रचापार्चितं खम् ।

सुरनरजयशब्दस्तोत्रकिम्मीरभेरी-

मुखरवमुखरं चाप्यास दिक्चक्रवालम् ॥ ५३ ॥

गलितचिरविरोधाः प्रासवन्तश्च मैत्रीं

मिथ इव जिनसेवालम्पटाः संपदिद्धाः ।

षडपि च ऋतवस्ते तत्र तत्रान्वगच्छन्

व्यवहरदयमीशो यत्र यत्रैव देशे ॥ ५४ ॥

न परमखिललोकः प्रातिकूल्यं विहाय

त्रिभुवनतिलकं तं वायुरप्यन्वियाय ।

दिविजसरसि मग्नः पुष्पगन्धोपवाही

मधुकरकुलशब्दच्छद्मना संस्तुवानः ॥ ५५ ॥

---

१. 'स' ख. पाठः. २. 'स्य' क. पाठः. ३. 'नु' ख. पाठः.

अपि च सदसि भर्तुः कच्छपाङ्कस्य रेजुः
सवरुणबहुरूपिण्यन्वहाराधितस्य ।
गणधरपदभाजोऽष्टादशैतच्छताङ्का
न परमवधिनेत्राः केवलज्ञानिनोऽपि ॥ ५६ ॥

शतविगलितमाना वादिनस्तुर्यबोधा-
स्त्रिशतगलितसंख्या विक्रियर्द्धिप्रसिद्धाः ।
अधिकशतचतुष्काः केवलिभ्यो बभूवु-
स्त्वधिगतदशपूर्वास्तुर्यबोधत्रिभागाः ॥ ५७ ॥

त्रिहतहयसहस्राण्यर्धलक्षं च लक्षं
त्रिगुणितमपि लक्षं शिक्षकाश्चार्यकाश्च ।
उपगतगृहमेधाः श्राविकाश्चाप्यसंख्याः
सुरसुरसुकुमार्यः प्राप्तसङ्ख्या मृगाश्च ॥ ५८ ॥

इति विषयमशेषं विश्ववन्द्यो विहृत्य
त्रिचरणपरिशिष्टं नूनमब्दायुतं सः ।
सुजनहृदयवप्रेषूप्ततत्त्वार्थसस्यः
प्रविशदमणिचूलं प्राप सम्मेदशैलम् ॥ ५९ ॥

तत्र स्थित्वैकमासं व्यपगतविहृतिः फाल्गुने कृष्णपक्षे
द्वादश्यामर्धरात्रौ सदशशतमुनिर्जन्मभे घात्यरातीन् ।
आरूढा योगिधामाद्विचरमसमये सप्ततिं द्विःप्रयुक्तां
शुक्लध्यानासियष्ट्या स चरमसमये वृत्तसङ्ख्याञ् जघान ॥

ईषत्प्राग्भारसंज्ञेऽष्टमधरणितलेऽमर्त्यलोकप्रमाणे
सिद्धक्षेत्रे विशुद्धः स जयति तनुपातान्त्यभागे कृतौकाः ।
किञ्चिन्न्यूनान्त्यदेहप्रमितिघननिजाकारभाक् क्षायिकैः स्वैः
सम्यक्त्वाद्यैरुपेतोऽष्टभिरमितसुखापादकैरस्तकर्मा ॥ ६१ ॥

आस्ते तत्र स निर्वृतः सुखसुधां चर्वन् सदात्यान्तिकीं
स्वस्थः संसृतिनाटकं स्फुटरसं पश्यन् विभावादिभिः ।
सम्पन्नः सकलैर्गुणैरनुपमैः स्थानं सिताभ्राकृतेः
कीर्त्तेरात्मसमैः सहैव पुरुषैः शुद्धैश्च बुद्धैः परम् ॥ ६२ ॥

अर्हद्दासः स भक्त्युल्लसितमवसितं भूधरे तत्र कृत्वा
कल्याणं तीर्थकर्तुः सुरकुलमहितः प्रापदात्मीयलोकम् ।
अर्हद्दासोऽयमित्थं[1] जिनपतिचरितं गौतमस्वाम्युपज्ञं
गुम्फित्वा काव्यबन्धं कविकुलमहितः प्रापदुच्चैः प्रमोदम् ॥

धावन् कापथसम्भृते भववने सन्मार्गमेकं परं
त्यक्त्वा श्रान्ततरश्चिराय कथमप्यासाद्य कालादमुम् ।
सद्धर्मामृतमुद्धृतं जिनवचःक्षीरोदधेरादरात्
पायंपायमितश्रमः सुखपदं दासो भवेत्यर्हतः[2] ॥ ६४ ॥

मिथ्यात्वकर्मपटलैश्चिरमावृते मे
युग्मे दृशोः कुपथयाननिदानभूते[3] ।
आशाधरोक्तिलसदञ्जनसम्प्रयोगै-
रच्छीकृतेऽद्य पृथुसत्पथमाश्रितोऽस्मि ॥ ६५ ॥

इत्यर्हद्दासकृतौ काव्यरत्ने भगवदुभयमुक्तिवर्णनो नाम
दशमः सर्गः ॥

---

मुनिसुव्रतकाव्यं सम्पूर्णम् ।

---

शुभमस्तु ।

---

१. 'द्धं', २. 'वाम्यर्ह' ख. पाठः. ३. 'धा' क. पाठः.

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancharatra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*out of stock*). | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 22—**मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—**नानार्थार्णवसंक्षेपः Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—**जानकीपरिणयः Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—**काणादसिद्धान्तचन्द्रिका Kanadasiddhantacandrika** (Nyāya) by Gaṅgādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—**अभिषेकनाटकम् Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—**कुमारसम्भवः Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—**वैखानसधर्मप्रश्नः Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—**नानार्थार्णवसंक्षेपः Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—**वास्तुविद्या Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—**नानार्थार्णवसंक्षेपः Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—**कुमारसम्भवः Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararucasangraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāsikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Sankara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghaṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka | | | |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapancahrdaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Sidhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् **Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alaṅkâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhinyayavichara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâṭaka) by Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayacandrika** (Śilpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣnânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 59—नागानन्दम् **Nangananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः **Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (vedânta) by Rṛṣnânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasangraha.** | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् **Kiratarjuniya** (Kâvya) by Bhāravî with the commentary Sabdârthadīpika of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः **Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣiṇâvartanātha. | 0 | 12 | 0 |
| No· 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चयः **Tantraasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śankara (Part I, 1–6 Paṭalās) (*out of stock*). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadīpikā of Śrī Kumāra | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśânaśivagurudevamiśra Part I, Sâmānyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्प **Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara (Part II, 7—12 Paṭalās) (*out of stock*). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part II. Mantrapāda). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः **Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya. (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Iśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् **Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I—1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—अर्थशास्त्रम् **Do.** Do. (Part II—3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśvarūpācārya (Part II. Prâyaścittâdhyâya). | 2 | 0 | 0 |
| No. 82—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśāna śivagurudevamiśra (Part IV, Kriyā pāda 31–64 Paṭalās and Yogapāda). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 84—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimula-kalpa** (Part III). | 2 | 0 | 0 |
| No. 85—**विष्णुसंहिता Visnusamhita** (Tantra) | 2 | 8 | 0 |
| No. 86—**भरतचरितम् Bharatacarita** (Kâvya). by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—**सङ्गीतसमयसारः Sangitasamayasara** (Sangīta) of Sangītâkara Pârśva-deva. | 1 | 2 | 0 |
| No. 88—**काव्यप्रकाशः Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûdâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsās). | 3 | 0 | 0 |
| No. 89—**स्फोटसिद्धिः Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—**मीमांसाश्लोकवार्त्तिकम् Mimamsasloka-vartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—**होराशास्त्रम् Horasastra** of Varāhamihirā-cārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—**रसोपनिषत् Rasopanisat.** | 2 | 0 | 0 |
| No. 93—**वेदान्तपरिभाषा Vedantaparibhasa** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśika of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—**बृहद्देशी Brihaddesi** (Sangīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—**रणदीपिका Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |
| No. 96—**ऋक्संहिता Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 97—नारदीयमनुसंहिता Naradiyamanusamhita (Smṛti) with Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—शिल्परत्नम् Silparatna (Śilpa) by Śrī-kumāra. | 2 | 8 | 0 |
| No. 99—मीमांसाश्लोकवार्त्तिकम् Mimamsasloka-vartika (Mīmāmsā) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—काव्यप्रकाश:Kavyaprakasa (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhitya-cūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6—10 Ullāsās). | 5 | 0 | 0 |
| No. 101—आर्यभटीयम् Aryabhatīya (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—दत्तिलम् Dattila (Saṅgīta) of Dattila-muni. | 0 | 4 | 0 |
| No. 103—हंससन्देशः Hamsasandesa (Vedānta) with commentary. | 0 | 8 | 0 |
| No. 104—साम्बपञ्चाशिका Sambapancasika (Stuti) with commentary. | 1 | 0 | 0 |
| No 105—निधिप्रदीपः Nidhipradipa of Siddha-śrikaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106—प्रक्रियासर्वस्वम् Prakriyasarvasva. (Vyākaraṇa) of Śrī Nārāyaṇa Bhaṭṭa with commentary (Part I.) | 1 | 0 | 0 |
| No. 107—काव्यरत्नम् Kavyaratna (Kavya) of Arhaddasa | 0 | 12 | 0 |

***Apply to:—***

*The Curator*
*for the publication of Oriental Manuscripts,*
*Trivandrum.*

